ओ३म्

# हास-विलासः

(आधुनिकतमा संस्कृत-हास्य-व्यंग्यरचना)

डा० प्रशस्यमित्रशास्त्री

ओ३म्

# हास-विलासः

(आधुनिकतमा संस्कृत-हास्य-व्यंग्यरचना)

डा० प्रशस्यमित्रशास्त्री

ओ३म्

अंशुमद्ग्रन्थमालायाम् अष्टादशं पुष्पम्—

# हास-विलासः

(संस्कृत-हास्य-व्यङ्ग्यरचना)

डा० प्रशस्यमित्रशास्त्री
एम०ए०, पी०-एच०डी०
लब्धस्वर्णपदकः




शिक्षक-प्रकाशन
प्रेम नगर, कानपुर-१
(भारत)
दूरवाणी : २४९०४४

प्रकाशक :

शिक्षक - प्रकाशनम्

१०५/१९४ प्रेमनगर, कानपुरम्–१

दूरवाणी–२४९०४४

○

उ० प्र० संस्कृत-अकादमीलक्ष्मणपुर-द्वारा
प्रदत्तेन आर्थिक-सहयोगेन प्रकाशितम् ।

○

प्रथमं संस्करणम् १९८६ ई०

○

मूल्यम् २५.००

○



○

मुद्रक :

साथी प्रेस

१०९/२३५ ए, जवाहरनगर, कानपुर

दूरवाणी : २४८२७१

# समर्पणम्



श्री पं० जगन्नाथप्रसाद आर्य

श्रीमतां ब्रह्मदत्तानां जिज्ञासूनां विपश्चिताम् ।
अन्तेवासित्वमासाद्य स्नेह - सौख्य - समन्वितः ॥

यत्प्रसादेन शास्त्राणाम् अभ्यासं कृतवानहम् ।
सुज्ञानं देवभाषायाः साङ्गोपाङ्गमवाप च ॥

तेषां श्रीतातपादानां प्रेरणादायिनां सदा ।
जगन्नाथप्रसादानाम् आर्याणां श्रीमतामहम् ॥

परया श्रद्धया सार्धं पवित्रे पाणियुग्मके ।
सादरम् अर्पयाम्येतत् स्फुटकाव्यनिबन्धनम् ॥

विनीतः
प्रशस्यमित्रशास्त्री

सम्पादकीयं वचः

# हासो विलासः खलु जीवनस्य

'हासो' हि स्थायिभावः मानवेषु, अथ 'व्यङ्ग्यम्' परिस्थितिप्रेरिता सहजा स्वाभाविकी अभिव्यक्तिर्मानवस्य। इत्थम्, हास्य-व्यङ्ग्ययोरियं धारा आदिकालादेव प्रवहमाना, कदाचित् सम्मिलिता कदाचिच्च पृथक्-पृथक्, कदाचित्सुस्पष्टा, कदाचिदस्पष्टापि च वाङ्मयम् अभिषिञ्चन्ती एव तिष्ठति।

साहित्ये हि हासो रसत्वेन काव्यात्मपदं संस्पृशति—'वाक्यं रसात्मकं काव्यम्'--इति, अथ व्यङ्ग्यमपि ध्वनित्वेन काव्यात्मपदमधिगृह्णाति--'ध्वनिरात्मा काव्यस्य' इति। एवं सर्वमानितमेव चिरन्तनं वैशिष्ट्यं हास्य-व्यङ्ग्ययोः। –

'हास्यं' हासतया उल्लासयति मानवस्यान्तर्जीवनम्, 'व्यङ्ग्यं' च प्रहारात्मकवृत्त्या सुतराम् आहत्य अन्तःकरणं सर्वथा विमुखयितुं यतते निखिलादपि दुरितान्मानवम्। अथ व्यङ्ग्यस्येयं प्रहारात्मकता हास्येऽपि परिलक्ष्यते–हास्यम् एकतः हास्यरसं द्योतयति, अपरतश्च सः उपहासादिना व्यङ्ग्योक्तिमपि निर्दिशति। एवं हास्ये वर्तमानेयं व्यङ्ग्यात्मकचेतना स्वत एव प्रवर्त्तयति विशिष्टामेतां 'हास्यव्यङ्ग्यविधाम्'। अथ व्यङ्ग्यस्य स्रोतः हास्यस्य प्रकृतौ भवति सम्मिलितम्।

## संस्कृते हास्यं-व्यङ्ग्यम् —

आधुनिकाः केचित् संस्कृत-साहित्ये चिरन्तनप्रथिताम् इमां हास्य-व्यङ्ग्यविधां पश्चिमप्रभावजन्यां 'सटायर' इत्यस्याऽनुकृतिं मन्यन्ते, न तेषां मतं कथञ्चिदपि समीचीनतां प्राप्तुमर्हति। शास्त्रकृद्भिराचार्यैः वागादिवैकृतैश्चेतोविकासरूपेण स्वीकृतो वर्णितश्च हासो रसः, विविध-भेदात्मको नानारूपात्मकश्च कथितः। सामान्येन तस्य द्वैविध्यमेव

प्रामुख्यं भजते प्रयोगलोके प्रायेण । कुत्रचित् स दृश्यते शुद्धः – वस्तु-स्थितिवर्णनपरः सामान्यः, स हि क्षणमात्रम् आमोदोद्भावनहेतुरेव भवति केवलम् । अपरत्राऽपरोऽवलोक्यते विशिष्टः प्रहारात्मकशक्तियुतः सोद्देश्यकः, कामं स व्यङ्ग्ययुतः, एष हि स्वलक्ष्यभूतं पात्रम् असामाजिकम् अमानवीयं सामाजिकचेतनाविरोधिनं प्रमाणयन् आमोदोद्भावनेन सह सुष्ठु परिष्कारम् अपि तत्र वाञ्छति । दृश्यते चैतादृशमेव उभयात्मकं रूपं प्राचीनतमेऽपि संस्कृतसाहित्ये,—तद्यथा–'कालिदासीये शाकुन्तले अन्यत्रापि च विदूषकादिवचःसु । यथा वा उत्तररामचरिते आश्वमेधिकाश्ववर्णनप्रसङ्गे आश्रमवटूक्तौ । यत्र तदध्ययनपरेषु पाठकेषु सामाजिकेषु वापि सुतरां प्रत्यक्षीभवति सामान्यो हास-विलासः । -अथ एवं शास्त्राचार्या अपि त्रिविधैरुदाहरणैः हास्यं प्रथयन्ति पाठकेषु—

यथा– 'केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः ।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥'

काव्यप्रकाशे मम्मटाचार्योऽप्युदाहरति हास्यम्–

'आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रथितथूत्कमदात् प्रहारं हा! हा! हतोऽहमिति, रोदिति विष्णुशर्मा ॥'

अथैवं साहित्यदर्पणे विश्वनाथोऽपि–

'गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ॥'

आध्यात्मिकविषयविवेचनपरेषूपनिषत्स्वपि, यथा काठके नचिकेतसो यमाचार्यं प्रत्युक्तिः –

'श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥'

एवं यमाचार्योक्तिष्वपि–

'दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमानाः यथान्धाः ॥'

इत्थमत्र दृश्यते यत्र-तत्र-सर्वत्र व्यङ्ग्याऽऽधारितेयं हास्यविधा सहृदय हृदय-संवेद्यत्वाद् अपूर्वं प्रभावकारि महत्त्वमावहति साहित्ये लोक-व्यवहारे चाऽपि ।

परम् एतदपि तथ्यमेव सर्वसम्मतञ्च तत्, नास्ति केषाञ्चिदप्यत्र विमतिः, यदेनां विधामाश्रित्य संस्कृते वाङ्मये न दृश्यन्ते पृथक्त्वेन प्रणीतयः, नाऽपि चाऽऽलोक्यतेऽस्याः कासुचिदपि साहित्यिकप्रणीतिषु प्राचुर्येण प्रयोगः। –अत्र नैवाऽस्त्यस्माकमेवमभिप्रायः, यद् हास्य-व्यङ्ग्य-प्रधानाः प्रणीतयः पुरा कदाचन प्रकाशपथमागता एव नहिं। मन्ये–नूनमभविष्यन् पुराऽपि हास्य-व्यङ्ग्यग्रन्थकाराः, संस्कृतसाहित्ये जगति, तेषां रचनाः संकलनानि वाऽपि समभविष्यन्, परं न तेषां नामतोऽपि क्वचिदुपलब्धिर्दृश्यते साम्प्रतिके युगे। तस्मात्तेषां सत्तापक्षः सम्प्रति केवलं कल्पनामञ्चमलङ्कुर्वाण एव राजते।

## हासविलास-सम्पादने हेतुः –

अधुना हि यद्यपि नव-संस्कृतसाहित्य-संरचनाक्रमः सुतरामनुदिनं प्रवर्धतेतरामेव' परमत्राऽपि हास्यव्यङ्ग्य-संजीवित-ग्रन्थ-रचना-संस्थितिः उदुम्बरपुष्पतामेव भजते। आम्, अवश्यं कविसम्मेलनेषु पत्र-पत्रिकासु चापि क्वचित् क्वचिद् हास्यं व्यंग्यं स्वसत्तां साधयितुं पर्य्युत्सुकोऽवलोक्यते। यत्र क्षणं सम्प्राप्ताऽऽमोदप्रसादेषु प्रबुद्धजनमानसेषु नूनमतिकालं प्रमोदापूरपूरिते मधुरार्णवे सुखं निमज्य सतत-सन्ताप-तापितमात्मानं सुखयितुमीहा प्रजागर्त्येव। तस्मादेव ह्यत्र ममापि परमा प्रीतिर्जाता-बुधजनप्रशस्यस्य प्रथितयशसो हास्यव्यङ्ग्यमहाकवेः डा॰प्रशस्यमित्रशास्त्रिणः हास-विलास-सुरस-पानेन सुतरां परितोष्यात्मानं द्विशत-पद्यप्रसूनगुच्छग्रथितस्य 'हास-विलास' इत्यभिधानप्रथितस्य नूतन-ग्रन्थरत्नस्य सम्पादन-प्रकाशन-प्रयत्नेन सहृदयजनमनःपरितोषाय नानासमस्याकुलाकुलिते जनजीवने सुमतिप्रबोधाय च।

## हासविलास-रचनाप्रकर्षः –

यथा पुरा प्रोक्तम्-'हास्यं-व्यङ्ग्यं' सदा भवति सोद्देश्यकं सामाजिक-चेतनापरिष्कारपरञ्च, कामं तथैवाऽत्र हास-विलासेऽपि परिलक्ष्यते।–अयं हि हास्यव्यङ्ग्यकारः विशिष्टां विधामिमां प्रहारात्मिकाम् अमोघास्त्ररूपेण तदा प्रयोक्तुं वाञ्छति, यदा तस्य मानसं बाह्यान्तर-विसङ्गति-

झञ्झाभिर्भवति व्याकुलितम् । तदानीं हि कवेः शब्दयोजना अभिव्यक्तिप्रक्रिया वा ऋजुतां विहाय वक्रतामाप्नोति । वक्रता चेयं मूलरूपेण भवत्येतस्य संवेदनासु निहिता, या हि प्रेम्णः कृते प्रेम, इतरस्य च कृते प्रहारवृत्तिमुत्प्रेरयति । एवमेष स्वव्यंग्यास्त्रप्रहारेण स्वलक्ष्यं भिनत्ति–यथा व्यंग्यपात्रभूतः सः लोकनिन्दितमाचरणं विहाय लोकरञ्जकव्यवहारं प्रत्युन्मुखो भवेत् । इत्थमस्य कवेः मनोरञ्जनेन समं सामाजिककुरीतीनां समूलमुच्छेदनाय सुमतिप्रेरितः सत्प्रयासो दृश्यते । तद्यथा–विवाहो द्वयोरात्मनोः पवित्रः सङ्गम उच्यते, परं यदि अभिभावकः कश्चित् स्वात्मजमतिमनवाप्यैव आयोजयेत् सम्बन्धम्, तदा का स्यात्स्थितिस्तस्य ? अवलोक्यताम्–'स्वविवाहार्थमवकाशं कामयमानं सेवकं स्वामी पृच्छति–'कदा प्रत्यागमिष्यसि ? तदा वक्ति सेवकः–'पत्न्याः मुखं निरीक्ष्यैव निर्णयोऽत्र करिष्यते' (१७७) । – नूनमत्र विवाहोत्सुकस्य तस्याऽऽह्लादसम्पूरितेऽपि मानसे क्वचिदन्तर्निगूढा पूर्वापराधाविता अन्तर्द्वन्द्वमयी व्यथा अपि राजते, यां सम्यक् पश्यति कवेः सूक्ष्मा दृष्टिः, अवश्यं तन्मूलमुच्छेत्तुमेव कविना प्रयुक्तोऽभूदयं वाग्बाणः । एवमन्यत्राऽपि बहुत्राऽत्र सामाजिककुरीतयो जनप्रवृत्तयो वा भवन्ति लक्ष्यभूताः कवेर्व्यंग्यस्य ।–

स्वार्थं परित्यज्य परोकारपरायणान् लोकसेवकान् प्रति लोके प्रवर्त्तमानं निरादरभावमनुपदं वीक्ष्य क्षोभं प्रकटयतः कवेः द्रष्टव्या परमाद्भुता परमप्रशस्या वाग्विदग्धता–'निरर्था पदयात्रेयम्' इति–

विधायकपदं यैश्च प्राप्तं सांसदं पदम् ।<br>
यैश्च मन्त्रिपदं प्राप्तं राज्यपालपदं तथा ।<br>
प्रधानमन्त्रिणो यैर्वा प्राप्तं राष्ट्रपतेः पदम् ।<br>
ध्रुवं सफला तेषां पदयात्रा हि भारते ।<br>
निरर्था पदयात्रा तु श्रीविनोवामहात्मनः ।<br>
येनैकमपि न प्राप्तं पदं स्वाधीनभारते ॥ (१०३)

सर्वोदयसिद्धान्तं समाजवादं वा समादृत्य प्रतिष्ठापिते जनतन्त्रात्मके संविधाने नूनं मतदानं सर्वतो विशिष्यते । परं तेन विद्वज्जनावसादजननी एका विपरिणतिरपि जायते सम्प्रति इति नाऽविदितं केषाञ्चिदपि–

तत्र प्रहारः व्यंग्यमाध्यमेन कवेः —

> दीनं करोति राजानं विद्वांसं मूर्खमेव च,
> माहात्म्यं मतपत्रस्य को न जानाति भारते ।
> मूकं करोति वाचालं पंगु लंघयते गिरिम्,
> राजयोगप्रदात्री सा नमस्या मतपेटिका ॥ (६४)

सत्यं हि सुकविप्रयुक्तेयं काव्ये हास्यव्यंग्यविधा तथाविधा भवति सर्वतो महनीया परमोच्चकोटितां गता वा विधा–'येन सर्पस्तु म्रियते परं न त्रुटयति कथंचिदपि दण्डः' ।' –युगेऽस्मिन् प्रवर्तमाने राजनीतिप्रकर्षे कथं विरुद्धतां गतो लोकः, कथं वा विपरीततामिता जनसम्माननपरा लोकदृष्टिरिति पश्यन्नपि बुधलोको न तत्र द्रष्टुमीहते । परं प्रशस्यस्य कवेः सुतीक्ष्णा निर्भीका च लेखनी नोपेक्षते तां लोकदृष्टिम्, प्रहरत्येव तत्र सुतरां वक्रया दिशा–

> विद्वत्वं च नृपत्वञ्च नैव तुल्यं कदाचन,
> गृहेऽपि नाऽर्च्यते विद्वान् नेता सर्वत्र पूज्यते ।
> ज्ञानविज्ञानगोष्ठीषु मुख्यवक्ता भवत्यसौ,
> पतिः सर्वसभानाञ्च नेता सर्वत्र व्यापकः । (२९)

कीदृशः कथं वा च स भवति नेता सत्यं स्पष्टञ्चोदाहरति व्यंग्येन 'भाग्यं फलति सर्वत्र' (१९८) इति पद्यगुच्छके । इत्थं हि सर्वत्र गामिनी कवेः सुसूक्ष्मतरा दृष्टिः सर्वथा पश्यति शास्त्रीयं सामाजिकं राष्ट्रियं वैयक्तिकं चापि दैनन्दिनं जीवनम्, यत्र मूर्त्ततामुपगच्छत् हास्यव्यंग्य-माध्यमेन सुष्ठु परिष्कारमाप्नोति तत् । – एवं हास्यंव्यंग्यमेतदेकं तत् सुमहद्विज्ञानं प्रतिपद्यते यद् व्यक्तिं व्यक्तिसमीपे आनीय सकलजनजीवनं परमाह्लादमयं कर्त्तुं प्रभवति ।

अथापि च–विदुषां दृष्टिः 'हास्यं व्यंग्यम्' तथाभूतं रसायनं मनुते यस्य सेवनेन जीवने क्लेशानुभूतेरवसर एव नाऽऽयाति । सत्यम्-अत्र सर्वजन-प्रशस्य महतो हि व्यंग्यकारस्य कौशल्याधारितायां कृतौ हास्यव्यंग्यस्य एकैकमपि पद्यचषकं यूनां किशोराणां वा कृते यदि भवत्यासवपूरितम्,

तर्हि तदेव प्रौढानां वृद्धानां च कृते भवत्यपूर्वं मकरध्वजरसायनम् । यद्यस्तीह तद्रसायनपानस्य, स्वीकुर्वन्तु भवन्तोऽपि हासविलासस्य पद्यचषकमेकम्—

लोके तु धन्विनः सर्वे भवन्ति द्वैतकारिणः,
एकोऽयं पुष्पधन्वा तु द्वैतेऽद्वैतं करोति यः ॥ (६५)

नूनमत्र सर्वत्र ग्रन्थे प्रतिभासते कवेरत्यद्भुता स्वाभाविकी क्षमता, यत्र गम्भीरतरविषयोऽपि सुसरलया पद्धत्या व्यपदिश्यते व्याक्रियते वाऽपि ।

अस्तु—नाऽहमत्राऽधिकं स्वमनःपरितोषणधिया बुधजनानां स्वाधीति-प्रसूत-परितोषाऽनुभूतिं कथंचित्परिहर्त्तुं कामये । परमेतदप्यस्ति परमं तथ्यम्—यदद्य प्रकाशनक्षेत्रे पदमादधानोऽहं सुतरां समासादित-प्राग्जन्म-परमसुकृतफलमिवाऽऽत्मानमनुभवामि, यदेतादृक्-संस्कृत-संरचना-प्रसृत-मतीनां सुकृतिनां मनीषिणां सान्निध्यं तत्कृति-सम्पादन-व्याजेन समवाप्य परमाह्लादकं किमपि जीवन-रसायनतत्त्वमधिगन्तुं प्राप्तावसरो भवामि ।

मन्येऽत्र प्रकाशने मुद्रणजाः सम्पादनजाः प्रमादजाः वाऽप्यनेके दोषाः भविष्यन्ति, तथाप्याशासे—'प्रीतिभावं पुरस्कृत्य समाधास्यन्ति सज्जनाः ।'

अथाप्यन्ते 'धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः' इत्याचार्य-प्रतिपादितां विलासपरिभाषां सर्वतोभावेन धारयन्तीं हास्यरचना-मिमां प्रति कामये—

अत्रोद्यातु दिवानिशं धृतिमतां चौर्यप्रवृत्तिः सुखम्
मित्राणां हृदयेषु चाऽपि सुतरामीर्ष्याङ्कुरो जागृयात् ।
इत्थं शत्रुविधानतोऽपि विभवो दुःखस्य नश्याद् द्रुतम्,
भूयाद् हास-विलास-लास-लसितं सौख्यं सदा सर्वदा ॥

विद्वदनुग्रहाकाङ्क्षी

**प्रकाशमित्रशास्त्री**

(संस्कृतविभागाध्यक्षः—डी.ए.वी. इण्टर कालेज
सम्पादकः—'पारिजातम्', १०५/१९४ प्रेमनगर, कानपुर

वसन्तपञ्चमी
सं० २०४२ वि०

———

# पुरोवाक्

श्रीमता (डा०) प्रशस्यमित्रशास्त्रिमहोदयेन विरचितो 'हासविलासो' मया अवालोकि ।

संस्कृतवाङ्मये यद्यपि हास्यसामग्र्याः अभावो नाऽस्ति, नाटकेषु, क्वचित्क्वचिदन्यत्र काव्येषु, किं बहुना गभीरेषु दार्शनिकग्रन्थेष्वपि हासजनिकाः अनेकाः सूक्तयः प्राप्यन्ते । यथा – अपौरुषेयताऽभ्युपगमेन श्रुतेः मीमांसकसम्मतं कौमार्यं नैयायिकैस्तस्याः पौरुषेयतोपगमेन तत्सम्बन्धे उदीयमानं भावं प्रदर्शयता आप्ताभिप्रायस्य विधिप्रत्ययार्थतां वदता आचार्येण 'विधिरेव श्रुतिकुमार्याः पुंयोगे मानम्' इत्युक्त्या गभीरो हासः प्रादर्शि ।

एवम् अद्वैतसिद्धौ मधुसूदनसरस्वतीमहोदयेन विवाहसमये कन्यापित्रा जामातुः गोत्रे पृष्टे—यद् भवतो गोत्रं तदेव ममापीति—जामातुः उत्तरेण कश्चन सपदि वेदान्तसिद्धान्तविशेषचर्चायां वैवाहिकसम्बन्धविच्छेदकरो हासः प्राकाशि ।

अकुशलयोः वैद्यपाठकयोः –

'त्वया न पठिता चण्डी मया नाऽपि चिकित्सितम् ।
ग्रामस्य दक्षिणे भागे कथं धूमायते चिता ।।'

इत्येष परम्पराऽऽलापोऽपि हास्यं निःशंसयम् उल्लासयत्येव ।

अभिज्ञानशाकुन्तलेऽपि शकुन्तलया प्रियंवदाकृतस्य चोलीबन्धनस्य क्लेशप्रदे दार्ढ्ये प्रकटिते 'आत्मानं यौवनमुपालभस्व' इति प्रियंवदोक्तिरपि सहृदयानां हृदये हास्यं जनयत्येव ।

तदेवं संस्कृतवाङ्मयस्य विभिन्नासु शाखासु हासप्रसंगानां हास्योक्तीनां च उपलम्भेऽपि वर्तमानयुगस्य पाठकानां मनोऽनुरूपायाः व्यंग्यगर्भायाः हास्यसामग्र्याः अभावः संस्कृतप्रणयिनां मनो नूनं दूनयत्येव ।

तदस्य महतोऽभावस्य निराकरणाय प्रत्यग्रप्रतिभाजुषा श्रीप्रशस्यमित्रेण 'हास-विलास'नामिका स्वकीया कमनीया कृतिः विदुषां समक्षं सोत्साहं प्रास्तावि ।

अस्मिन् ग्रन्थे वेदानां पुराणानां गीताप्रभृतिदार्शनिकग्रन्थानां च वाक्यानि प्रसंग-विशेषेण संयोज्य तथा उपन्यस्तानि यथा ततः पाठकानां मानसं हास्योदयोदितानन्दसन्दोहेन भृशं तुन्दिलं भवति । यथा--हत्यापराधे मृत्युदण्डं घोषितवन्तं न्यायाधीशम्प्रति अपराधिनः –

'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्,
उभौ तौ न विजानीतः नाऽयं हन्ति न हन्यते ।'

इति गीतावचनोपन्यासेन न्यायाधीशनिर्णयस्य अज्ञानपारवश्योक्तिः । एवम् 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।' इत्येवमादीनि बहूनि पद्यानि हास्यकरप्रसंगे संयोजितानि विपश्चितां चेतश्चमत्कुर्वन्ति ।

भारतस्य विभिन्नानां प्रदेशनाम्नां व्युत्पत्तिप्रदर्शनमपि श्रीशास्त्रिणा तथोपन्यासि यथा ततो हर्षोद्रेकः सर्वस्यैव पठितुः निःसंशयं सञ्जायत एव ।

संक्षिप्ते सम्मतिवचसि प्रभूतोदाहरणोपन्यासस्याऽनुपयुक्ततां विभाव्य ग्रन्थस्याऽस्य पाठकानेव सस्नेहमनुषध्मि यत्ते स्वयमेव अवहितेन चेतसा ग्रन्थमेनमधीत्य प्रहसितवदना भवन्तो ग्रन्थकारस्य प्रतिभावैभवं भव्यया सरलया च भाषया विवक्षितविषयोपन्यासपद्धतिं विलोक्य तदीयं प्रयासं प्रशंसन्तु, प्रेरयन्तु च आत्मनोऽभिमतप्रकारेण ईदृशीनां रमणीयरचनानां निरन्तरं प्रवर्तनया संस्कृतवाण्यां बद्धादराणां सहृदयजनानाम् अन्तःकरण-प्रीणनोपायकसामग्रीसौलभ्यसम्पादनाय ।

अहं श्रीप्रशस्यमित्रशास्त्रिणः लेखलालित्यसम्पादनप्रतिभया नव-नवोन्मेषनैपुण्यसम्बन्धतया मनीषिमनोरञ्जनक्षम-रचना-प्रस्तुतीकरण-प्रवीणतया चातितरां प्रमोदमनुविन्दन् 'हासविलास' प्रणेतारं श्रीप्रशस्य-मित्रम् अभिनन्दनवचोभिः विद्याक्षेत्रीययशोवृद्धिकरैराशीर्वचोभिश्च सानन्दं सभाजयामि ।

१६-१०-८५ **आचार्यः बदरीनाथशुक्लः**
पूर्वकुलपतिः –संस्कृत-विश्वविद्यालय, वाराणसी

# रुचिरं प्रज्ञयोपेतं काव्यं हासविलासकम्

हास्यव्यंग्यविधां नीता: प्रशस्या: काव्यसूक्तय: ।
नीत्यां सम्मानमर्हन्ति मन:कायनियामिका: ।।

कर्षति विदुषां चित्तं तासां भणितिभंगिमा ।
निबद्धो भावभव्येन निस्सृतो मोददायक: ।।

कतिपये शुभा: शिष्टा: प्रजाशिक्षणतत्परा: ।
कुर्वन्ति कवय: काव्यं देशकालविवक्षया ।।

श्रावयन् श्लोकमञ्जूषां प्रशस्य: शस्यते बुधै: ।
कुशल: कविकर्तृत्वे मित्रो मैत्रेयमण्डपे ।।

कौस्तुभकान्ति कौमुद्या क्रीडनं काव्यकीर्तनम् ।
प्रतिभादीप्तिदीधितम् जीवितं जीवनं कवे: ।।

हास्यव्यङ्ग्यं मरुभूम्यां प्रपातुल्यं कवे: कृतम् ।
क्षणदं क्षणमात्रेण मनोरञ्जनकारकम् ।।

हास्यव्यंग्यादुपरिस्था पुष्टि: तुष्टिरनेकधा ।
सिद्धिर्वेज्ञानिकी प्रोक्ता कविभि: स्वानुभूतित: ।।

प्रशस्यमित्ररचितं काव्यं हासविलासकम् ।
रुचिरं प्रज्ञयोपेतं साधुवादं मयार्हति ।।

**डा. मुंशीरामशर्मा 'सोम'**
निदेशक:
वैदिक शोध-संस्थानम्
(दयानन्द महाविद्यालय:)
९/७० आर्यनगरम्, कानपुरम्

———

# प्रीतिमभिनवां जनयिष्यति

चिरं जीवन्तु डा० प्रशस्यमित्रशास्त्रिणो यैरुपनिबद्धोऽयम् अभिनवो 'हास्यविलासः' प्रीतिमभिनवां कामपि जनयिष्यति रसिकानां सुरभारतीविलासेषु सनातनेषु। पुनः पुनः शुभाशंसाः।

**(डा.) रामकरण शर्मा**
कुलपतिः –
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः,
वाराणसी-२

---

# संस्कृत जगत् के लिये अनूठी देन

......'हासविलास' का प्रकाशन संस्कृत-जगत् के लिए सचमुच अनूठी देन होगी। श्री (डा०) प्रशस्यमित्रजी के हास्य व्यंग्य हैं ही बेजोड़। व्यंग्योक्तियाँ हृदय को गुदगुदाने एवं रसाप्लावित करने में पूर्णतया सफल हैं। कोई भी साहित्य-रसिक इनसे पूर्ण आनन्द प्राप्त कर सकता है। मैं इसकी अनुभवी हूँ। इसके प्रकाशन से संस्कृत-साहित्य को जो प्राप्त होगा, उसके लिए लेखक को कोटिशः धन्यवाद··· ···।

**(डा.) प्रज्ञादेवी आचार्या**
संस्थापिका—
जिज्ञासु स्मारक कन्या पाणिनि महाविद्यालय,
वाराणसी-५

# समाजस्य दुर्गुणान् दूरीकर्तुं क्षमते

वर्तमानसंस्कृतकविता यैर्वैशिष्ट्यैरन्यद् भारतीयवाङ्मयं तुलयितुं प्रभवति कदाचिदतिशेते वा तत्र हास्यस्य व्यंग्यस्य च प्रमुखं स्थानम्। साम्प्रतिकं व्यंग्यं सहृदयश्लाघ्यं काव्यात्मभूतं तत्त्वं सदपि भावाभिव्यक्तिशैलीं काञ्चित् परमरमणीयां सहृदय-हृदयाह्लादकारिणीं साध्वभिव्यनक्ति। अनया शैल्या विद्रूपमधिक्षेपञ्चावलम्ब्य कविः समाजस्य राष्ट्रस्य परम्परायाश्च दुर्गुणान् दूरीकर्तुमनायासमेव क्षमते।

भावाभिव्यञ्जनस्येमामेव परिपाटीं स्वकवित्वयोग्यतया प्राक्तनसंस्कारानुप्राणितप्रतिभया च सम्यक् पल्लवयन् डा० प्रशस्यमित्र इदानीं निखिलेऽपि राष्ट्रे हास्य-व्यंग्य-कविप्रतिष्ठां निरर्गलं निष्कण्टकञ्च भजते। क्वचिन्नवनवोन्मेषसंवलितया प्रतिभया, क्वचित्प्राचीनकाव्यपंक्तिसंशोधनेन, क्वचिद्वक्रोक्तिपण्डितया पदावल्या, क्वचिच्च पुरातनसंवादानुकरणमात्रेण संस्कृतपाठकान् सहृदयान् सुरभारतीपक्षधरान् साध्वनुरञ्जयन प्रशस्यमित्रो निश्चप्रचं प्रशस्यमित्रं समाजस्य, प्रशस्यमित्रश्चाऽपि अज्ञानतिमिरस्य।

मन्ये तत्प्रणीतोऽयं हासविलासो मद्व्यवहारं प्रमाणीकरिष्यन् संस्कृतकाव्यरसमाधुरीमार्मिकान् रसज्ञान् सम्यगनुरञ्जयिष्यति।

सस्नेहं व्याहरति—

**मिश्रोऽभिराजराजेन्द्रः**

प्रवाचकः —
प्रयागविश्वविद्यालयीये संस्कृत-विभागे
८ बाघम्बरी मार्ग, इलाहाबाद

१०-८-८५

# समासादितोऽमन्दाऽऽनन्दसन्दोहः

········प्रकाश्यमानस्य हासविलासग्रन्थस्य प्रारम्भिक-फर्माद्वयम् मयाऽधिगतम् अधीतञ्च । समासादितश्च तेनाऽमन्दाऽऽनन्दसन्दोहः ।

संस्कृतवाङ्मये हास्यरसप्रधानाः ग्रन्था अल्पीयांस एव । अतो ग्रन्थस्याऽस्य किमपि विशिष्टं महत्त्वम् । ग्रन्थोऽयं सहृदयानां मन आवर्जयिष्यति तांश्च सर्वथाऽऽनन्दभरनिर्भरान् विधास्यतीति दृढो मे प्रत्ययः ।

**डा० सत्यव्रतशास्त्री**
प्रोफेसर संस्कृत विभाग, दिल्ली विश्वविद्यालय
एवं
पूर्व कुलपति—संस्कृत विश्वविद्यालय, पुरी

---

# हास्य-व्यङ्ग्यक्षेत्रेऽभिनवः प्रयासः

डा० प्रशस्यमित्रशास्त्रिविरचितः 'हासविलास' इति ग्रन्थः संस्कृतभाषायां हास्य-व्यंग्यक्षेत्रेऽभिनवः प्रयासो वर्त्तते ।

न केवलमत्र मनोरञ्जनमेवाऽपितु जीवनस्य विभिन्नक्षेत्रेषु वर्तमानाः क्वचिद्विसंगतयोऽपि व्यंग्यमाध्यमेन स्पष्टं प्रकटीभूताः । अहमेतद्ग्रन्थप्रणयनाय लेखकाय शुभाशंसनं कुर्वाणो गद्यक्षेत्रेऽपि तथाविधप्रयासकरणाय प्रेरयितुम् इच्छामि ।

**आचार्यः (डा०) विजयपालः**
पाणिनि महाविद्यालय, बहालगढ़, सोनीपत

## ...भवत्यतितरां सर्वाङ्गहासोदयः

विलासे हासे वा हसनलपना वक्रवचना,
प्रिया मूलीभूता कविवदनसूता च रचना।
विलोक्य प्राशस्यां स्मितमुखवयस्यामिव कृतिम्,
नमस्यां हास्यास्याम्बुजपुटविकास्यं बुधजनैः ।।

ग्रन्थे हासविलासनामनि कविर्मित्रः प्रशस्याभिधो,
जग्रन्थाधुनिकाँश्च यान् स विषयान् हासाय मोदाय च।
तांस्तानक्षणि चाधरे च वदने दन्ते कपोले भ्रुवि
पाठंपाठमहो भवत्यतितरां सर्वाङ्गहासोदयः ।।

उल्लास्य हास्य-रचनां कविभिर्विचित्राम्,
आस्यं न कस्य मनुजस्य विकासितं स्यात्।
किन्त्वट्टहासभुवि हासविलासनिर्यद्
हास्यं प्रशस्यकविना न विना प्रशस्यम् ।।

आनन्दयन्ति मदयन्ति विडम्बयन्ति,
सम्मोहयन्ति रमयन्ति विलोभयन्ति।
एताः प्रशस्य-कविताः वनिता इवाप्ताः,
किं नाम लोचनगताः न समाचरन्ति ।।

**आचार्यः सोमदत्तवाजपेयी**
प्रवक्ता–डी एम.यू.इ. कालेज
अध्यक्षः — 'रुद्रमङ्गलम्'
उपाध्यक्षः – 'कौस्तुभम्' (सुरभारती प्रतिष्ठानम्)
२९/५८ माहेश्वरीमोहाल, कानपुरम्

# विलक्षणमत्र लालित्यं मनोहारित्वञ्च

x x x x हास-विलासस्य प्रकाशनाय भूरिशो वर्धापनानि x x x x। ग्रन्थेऽस्मिन् प्रकाशितानि हास्य-व्यंग्य-पद्यानि ध्रुवमेव सहृदयानां चेतांसि रमयितुं योग्यानि x x x। भाषायाः लालित्यं सारल्यं शिल्पस्य च मनोहारित्वमत्र सर्वथैव विलक्षणम्। अतोऽहं दृढं मन्ये—बहुमूल्येनाऽनेन प्रकाशनेन संस्कृतवाङ्मयसम्पत् नूनमेव वृद्धिमेष्यति।

आशासे, एतादृशानि अन्यान्यपि प्रकाशनानि श्रीमल्लेखन्या प्राकाश्यमायास्यन्ति।

**डा० राममूर्तिशर्मा**
अध्यक्ष–संस्कृत-विभाग
पंजाब विश्वविद्यालय, चण्डीगढ़

---

# हासविलासः सर्वैः सम्मानितः

नव्यव्यंग्यविधानान्दोलनसाहित्यसंरचने।
श्रीमान् प्रशस्यमित्रः शास्त्री सर्वैः समादृतो जयति॥

नूनं हास-विलासः सर्वैः सम्मानितो भवति।
का ननु कथा यदाऽयं प्रशस्यमित्रैः समर्पितो भूयात्॥

संस्कृतरचनामध्ये हास्यह्रासस्तुदत्यलं लोकान्।
हास्यमिदं तत्तत्त्वं यत्केवलमत्र दृश्यते मनुजे॥

हास्येन हीनतायां मनुजः पशुतुल्य एव स्यात्।
तस्माद्धास्यं काम्यं जनुषस्तत्रैव साफल्यम्॥

संस्कृतनवसाहित्ये हास-विलासस्य सौरभं विकिरन्।
सोऽयं प्रशस्यमित्रो नूनं निर्व्याजबन्धुतां यातः॥

**डा० शिवदत्त शर्मा चतुर्वेदी**
रीडर
काशी हिन्दू विश्वविद्यालय, वाराणसी

## यत्र दन्ध्वन्यते युगबोधः

नैकासु काव्यगोष्ठीषु कविसम्मेलनेषु च,
कवेः प्रशस्यमित्रस्य शास्त्रिणः सुष्ठुभाषिणः ।
बहुधा श्रुतपूर्वं यन्मया तदवलोकितम्,
काव्यं हास-विलासाख्यं हास्य-व्यंग्यसमन्वितम् ।
यत्र दन्ध्वन्यते तस्य युगबोधः पदे पदे,
कवेः शोभनशैलीकां द्योतयन् प्रतिभां नवाम् ।
सरलं सरसं तद्धि प्रसादगुणसंयुतम्,
प्रीतये जायतां नित्यं विदुषां च सचेतसाम् ।।

बाबूराम अवस्थी, एम०ए० आचार्यः
मंत्री-संस्कृतपरिषद्, लखीमपुर-खीरी

---

## 'इसमें वर्तमान पर सब कुछ है'

मित्र डा० प्रशस्यमित्र शास्त्री की हास्य-व्यंग्य कविताओं का आनन्द मैं अरसे से लेता आ रहा हूँ। उनके इस 'हास-विलास' में उनकी जिन्दादिली, उनका पर्यवेक्षण, वर्तमान पर उनकी समालोचना, सब कुछ है। समाज की दुखती रगों पर उनकी उंगली मर्म को भी छू जाती है।

जिसमें हँसने हँसाने की क्षमता नहीं, उसकी मनुष्यता में कुछ कमी अवश्य रह गई है, ऐसा जानना चाहिये। विधाता ने आनन्दी होकर, आनन्द से आनन्द के लिए सृष्टि का सर्जन किया है, अतः प्रकृति का कण-कण और प्रत्येक तरंग हँसती-गाती, नाचती-इठलाती झूमती-झूलती, लुभाती ललचाती है। हँसो, अपने पर हँसो। हँसने वाला पराए को अपना बना लेता है जबकि सूम अपनों को भी पराया कर बैठता है। 'प्रशस्य'-मित्र की इस हास-प्रशस्तता से पाठक अपने को उनका 'प्रशस्य' मित्र बना लें, इसमें प्रशस्यमित्र की भी धन्यता है और उनके कलम की भी। पाठक तो उनकी कविता माधुरी से छक कर धन्य होगा ही।

बन्धु कवि काव्य क्षेत्र में अन्य भी एक से एक बढ़कर रचनायें देने के उपक्रम में 'हास-विलास' से श्री गणेश कर रहे हैं। उनका अभिनन्दन और वर्धापन।

डॉ० अभयदेव शर्मा एम०ए०
सम्पादक-'वेदसंहिता' एवं अध्यक्ष स्नातकोत्तर संस्कृतविभाग
राजकीय महाविद्यालय, अजमेर [ राज० ]

## मौलिक-मुक्तकरचनानां संग्रहोऽयम्

••• ••• नवशेमुषीजुषो डा० प्रशस्यमित्रशास्त्रिणो मौलिक-मुक्तकरचनानां संग्रहोऽयं 'हासविलासः' व्यञ्जनप्रवणतया मुक्तककाव्यकोटिं स्पृशन्निव संस्कृते काम्प्याधुनिकीं काव्यविधामुद्भावयन् प्राकाश्यं नीयत इति सुधियो मोदन्ताम् ।

नूनमिमाः सूक्ष्मेक्षणाः हास्यव्यंग्योक्तयः शिक्षा-धर्म-समाज-राजनीति-साहित्य-प्रभृतिक्षेत्रेषु परिव्याप्तान् दोषान् सुतीक्ष्णं प्रहरन्त्यः शक्तय इव सत्याग्रहणाय लोकान् प्रेरयन्तीति दृढमनुमोदयते —

तेजोमित्र आचार्यः
डी.ए वी. स्नातकोत्तर महाविद्यालय, देहरादून

---

## रचनेयं चमत्करोति चेतः

संस्कृतसाहित्ये हास्य-व्यंग्यक्षेत्रे विश्रुतनाम्ना डा० प्रशस्यमित्रेण विरचितः 'हास-विलास' नामको ग्रन्थो मयाऽनुशीलितः । सहजपदावगुम्फिता हास्यप्रधानेयं रचना कस्य न चेतश्चमत्करोति ? कस्य न स्वान्तं नितान्तमाकर्षति ? विविधाभिः समस्याभिरविरलमाकुलितः साम्प्रतिको जनो यथा वैशद्यमासादयति तथा निपुणं प्रयतितम् अनेन रचनाकारेण । अतः सरसकान्तपदावलियुतमिदं काव्यं जनानां हृदयान्यावर्जयिष्यतीति दृढं प्रत्येमि । संस्कृतसाहित्ये नवीनां पद्धतिं समाश्रयमाणोऽयं विपश्चिदपश्चिमः कविर्मे सभाजनार्होऽभिनन्दनार्हश्च । भविष्यत्यपि काव्यसुमनोभिः काव्यरसिकान् कुतुकवशंवदान् करिष्यतीति कामयमानः —

(डॉ०) सुद्युम्नाचार्यः
अध्यक्षः—स्नातकोत्तरसंस्कृतविभागे,
मु०म० टाउन महाविद्यालय, बलिया

---

## सतीक्ष्णं प्रहाराः व्यंग्यमाध्यमेन

अस्माकं सहयोगिनः डा० प्रशस्यमित्रशास्त्रिणः संस्कृतसाहित्ये आधुनिकसन्दर्भे हास्यव्यंग्यविषये सिद्धहस्ताः अद्वितीयाः लेखकाः वर्तन्ते । एतेषां रचनासु समाजस्य विविधपक्षेषु सतीक्ष्णं प्रहारा व्यंग्यमाध्यमेन प्रकटीभूताः सन्ति ।

सहजया सरलया सरसया च संस्कृतगिरा हास्य-व्यंग्य-लेखनं प्रायः काठिन्यं भजते । साम्प्रतं च व्यंग्यलेखनं साहित्यस्य विशिष्टः स्थापितश्च पक्षः सञ्जातः । तत्र संस्कृतसाहित्ये 'हासविलासः' भविष्यत्काले किमपि वैशिष्ट्यं स्थानं लप्स्यत इति कामयमानः —

डा० घनश्याम तिवारी
प्राचार्यः, सी०एस०एन० कालेज, हरदोई

# पृष्ठभूमिः

प्रसिद्ध उक्ति है कि 'साहित्य समाज का दर्पण होता है।' आज जब कि भारतीय भाषाओं का विशाल साहित्य अपनी अनेक विधाओं ( यथा—कविता, कहानी, लेख, नाटक, यात्रा-वृत्तान्त, परिचर्चा आदि ) के द्वारा राष्ट्रिय और अन्तरराष्ट्रिय स्तर के समसामयिक राजनीतिक सामाजिक और धार्मिक समस्याओं, संघर्षों तथा विभिन्न विचारधाराओं का चित्रण करने में व्यस्त है, हमारे संस्कृत-भाषा के विद्वानों और साहित्यकारों का लेखन इस सन्दर्भ में अत्यन्त पिछड़ा हुआ या लगभग नगण्य सा है। आज भी हमारी रचनाधर्मिता का विषय, आलोचना तथा चर्चा का पात्र प्राय: वही मध्ययुगीन संस्कृतसाहित्य है, जिससे ऊपर उठकर वर्तमान परिवेश में हम कुछ सोच समझ नहीं पाते हैं। कविता या पद्य के क्षेत्र में तो कुछ लोगों ने अभिनव प्रयोग अवश्य किये हैं तथा शास्त्रीय छन्दों के अतिरिक्त नये स्वरों में भी संस्कृत कविता का रूप प्रस्तुत किया है किन्तु उनका चिन्तन भी विषय की दृष्टि से प्राय: अनभिनव ही है।

संस्कृत-साहित्य में शास्त्रीय पद्धति में लेखन, आलोचना, टीका आदि का कार्य आज भी पर्याप्त मात्रा में हो रहा है किन्तु यह भी आवश्यक प्रतीत होता है कि इस गंभीर साहित्य के निर्माण के साथ ही संस्कृत-भाषा में समसामयिक साहित्य के समान ही तात्कालिक समाज एवं व्यवहार का चित्रण प्रस्तुत कर उसे वर्तमान सन्दर्भों के साथ जोड़ा जाय। ज्ञातव्य है कि इन सबके अभाव में ही कुछ मन्दबुद्धि लोग संस्कृत को 'मृतभाषा' कहने का दुःसाहस कर बैठते हैं।

मेरे विचार से इसमें उनका भी इतना दोष नहीं, जितना कि हम वर्त्तमानकालिक संस्कृत-साहित्य के लेखकों एवं रचनाकारों का। आज स्थिति यह है कि संस्कृत-साहित्य का लेखक या विद्वान् प्राय: उसी को

माना जाता है जिसने कि प्राचीन शास्त्रों की गंभीर चिन्तनधारा पर ही कुछ लिखा है या जो उसकी आलोचना, टीका, उपटीका आदि में जुटा हुआ है। जो व्यक्ति सरल, सरस, रुचिकर किन्तु साधारण सामयिक मौलिक रचना भी प्रस्तुत करता है, उसे अगंभीर, अशास्त्रीय, अति-साधारण या बेकार कहकर उपेक्षित कर दिया जाता है। जबकि भाषा के जीवन्त प्रवाह को बनाये रखने के लिए एवंविध रचनाओं का प्रशंसात्मक मूल्यांकन तथा प्रोत्साहन भी आवश्यक होना चाहिये।

## प्रवृत्ति और प्रेरणा

एक बार संस्कृत विश्वविद्यालय वाराणसी के दीक्षान्त-समारोह की पूर्वसन्ध्या पर एक विशाल संस्कृत-कवि-सम्मेलन आयोजित हुआ। इस कवि-सम्मेलन की अध्यक्षता संस्कृत एवं हिन्दी-साहित्य के उद्‌भट विद्वान् डा० हजारीप्रसाद जी द्विवेदी कर रहे थे। कवि-सम्मेलन में अधिकांश कवियों ने प्रायः अपनी कविता में वही पुराना विषय, जैसे शृंगार, वसन्तादि ऋतु वर्णन या पौराणिक देवस्तुति आदि ही प्रस्तुत किया। कुछ लोगों ने अवश्य देशभक्ति से सम्बद्ध गीत या आधुनिक भारत की स्तुति या प्रशंसा को अपना विषय बनाकर रचनायें प्रस्तुत कीं। इस कवि-सम्मेलन में मैं भी संस्कृत-भाषा के एक साधारण हास्य एवं व्यंग्य-रचनाकार के रूप में निमन्त्रित था। मेरा प्रयास यही रहता है कि हास्य-व्यंग्य केवल कवि-मस्तिष्क की कल्पनामात्र न होकर आधुनिक मानव के जीवन-सन्दर्भों एवं अनुभूतियों को भी स्पर्श करने वाला हो। मैंने उस कवि-सम्मेलन में अस्थिर केन्द्रीय सरकार के तत्कालीन प्रधानमन्त्री श्री चरण सिंह जी पर एक व्यंग्य प्रस्तुत किया जो इस प्रकार से था—

स्थितः प्रधानमन्त्रित्वे केवलं कार्यवाहके,<br>
विशिष्टं नीतिविषयं निर्णयं कर्त्तुमक्षकः।<br>
चरणसिंहः पदासीनः सर्वथा शोभते तथा,<br>
सिन्दूरस्य यथा विन्दुर्विधवायास्तु मस्तके॥

पूज्य द्विवेदी जी इस सरल सहज व्यंग्य को तथा उस कविसम्मेलन में मेरे अन्य अनेक व्यंग्यों को सुनकर बहुत प्रसन्न हुए तथा मुझे आशीर्वाद देते हुये अपने भाषण में संस्कृत-भाषा को सामयिक सन्दर्भों से

युक्त साधारण जनता के लिये भी रुचिकर एवं ग्राह्य बनाने पर बल देते हुए कहा कि–'यदि आज के युग में हम इस भाषा को व्यापक आधार देना चाहते हैं तो यह आवश्यक है कि शास्त्रीय विषयों के चिन्तन और आलोचन के साथ ही हम इसका वह रूप भी प्रस्तुत करें जो सबको रुचिकर तथा मनोरञ्जक प्रतीत हो। इस भाषा में हम आज भी कुछ सोचें एवं अनुभूतियों को सहज शब्दों में बाँधकर जनता को प्रदान करें, तभी यह व्यापक और ग्राह्य बन सकेगी। अन्यथा यह बीते सदियों की भाषा के रूप में ही स्मृत की जायेगी।

## गाण्डीवम् एवं पारिजातम् में 'व्यङ्ग्य-स्तम्भ'

इस कवि-सम्मेलन के बाद आचार्य द्विवेदी जी ने जहाँ मुझे पुनः व्यक्तिगत रूप से मेरी रचनाओं के लिए प्रोत्साहित किया, वहीं उन्हीं दिनों संस्कृत विश्वविद्यालय से प्रकाशित होने वाले 'गाण्डावम्' नामक संस्कृत-साप्ताहिक में मैंने 'छिद्रान्वेषी' उपनाम से 'हास-कणिका' नामक एक लघु स्तम्भ के लिए अनुष्टुप् छन्द में लिखना भी प्रारम्भ किया जो उन दिनों बहुत लोकप्रिय हुआ। इस स्तम्भ को प्रारम्भ करने की प्रेरणा और प्रोत्साहन मुझे संस्कृत-विश्वविद्यालय के ही श्रमण-संकाय के अध्यक्ष एवं बौद्धदर्शन के प्रख्यात विद्वान् तथा पत्रिका के सम्पादक प्रो० जगन्नाथ जी उपाध्याय द्वारा प्राप्त हुआ। जिन्होंने मुझे अत्यन्त आग्रहपूर्वक इस स्तम्भ के लिए नियमित किया। इस हास्य एवं व्यंग्य प्रधान स्तम्भ में मैंने तत्कालीन भारतीय राजनीति, विश्व-समस्याओं, सामाजिक सन्दर्भों एवं जन-जीवन के विभिन्न पक्षों को अपने व्यंग्य का लक्ष्य बनाया (यह स्तम्भ आज भी नियमित चल रहा है)।

इसके साथ ही जब कानपुर से 'पारिजातम्' (जो वर्तमान समय में संस्कृत के सर्वोत्तम मासिक पत्रों में से एक है) के प्रकाशन का श्रीगणेश १९८२ ई० में किया गया तब इसके सम्पादक एवं मेरे अभिन्न एवं अग्रज-तुल्य डा० प्रकाशमित्र शास्त्री ने भी अनुरोधपूर्वक इस पत्रिका में 'हास्यं-व्यंग्यम्' इस स्तम्भ के अन्तर्गत मेरी विभिन्न व्यंग्य-प्रधान रचनाओं का प्रकाशन प्रारम्भ किया जो पाठकों में अत्यन्त लोकप्रिय सिद्ध हुआ।

बाद में तो अनेक संस्कृत-पत्रिकाओं ने मेरे इन नियमित व्यंग्य-स्तम्भों को देखकर मुझसे हास्य एवं व्यंग्य श्लोकों को भेजने का आग्रह किया जो अब भी यथासमय छपते ही रहते हैं। पत्रिकाओं में प्रकाशित इन हास्य एवं व्यंग्य श्लोकों को पढ़कर अनेक मित्रों एवं संस्कृतानुरागियों ने मुझसे बहुधा कहा कि इन श्लोकों का एक संकलन प्रकाशित होना चाहिये।

## संकलन प्रकाशन का विचार

मेरा विचार प्रारम्भ में बहुत दिनों तक इन हास्य-व्यंग्य श्लोकों का संग्रह प्रकाशित कराने का इसलिए नहीं हो रहा था कि इसके अधिकतर श्लोक ऐसे थे जिनका तात्कालिक महत्त्व तो था किन्तु समय बीतने पर कुछ दिनों बाद उनकी उपयोगिता प्रायः समाप्त हो जाती थी। उदाहरणतः विहारप्रान्त में तत्कालीन मुख्यमन्त्री श्री जगन्नाथ मिश्र के शासन काल में जब 'बिहार-प्रेस-विधेयक' विधानसभा में प्रस्तुत किया गया, तब देश की तमाम पत्र-पत्रिकाओं में इसके विरुद्ध एक आक्रोशात्मक उबाल सा आ गया था। यह आवश्यक था कि संस्कृत-पत्रिकायें भी इसमें पीछे न रहती। मैंने तभी 'गाण्डीवम्' 'पारिजातम्' तथा अन्य पत्रिकाओं में भी इस पर अपनी प्रतिक्रिया व्यक्त करते हुए निम्न दो व्यंग्य लिखे थे—

जनताविषमाप्नोति प्रेसविधेयकात्मकम्,<br>
वोटरूपात्मकं दुग्धं पाययित्वा भुजंगमान्।<br>
नागनाथो जगन्नाथो विहारे विहरत्यहो,<br>
'पयःपानं भुजंगानां केवलं विषवर्धनम्'॥

तथा

नित्यं शासनतन्त्रस्य पत्रकाराः पदे पदे,<br>
आलोचनं यत् कुर्वन्ति तद् वै शास्त्रेषु वर्जितम्।<br>
आलोचनं प्रियं कस्य ? धर्मश्चैष सनातनः,<br>
'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।<br>
जगन्नाथो मुख्यमन्त्री विद्वान् परमधार्मिकः,<br>
प्रेसविधेयकाज्जातो धर्मचक्रप्रवर्त्तकः॥

ये टिप्पणियाँ तीक्ष्ण एवं व्यंग्यपूर्ण होने पर भी तत्काल में तो उपयोगी हैं किन्तु ऐसी व्यंग्योक्तियों का संकलन प्रकाशित होने पर उन सन्दर्भों से अपरिचित व्यक्ति के लिये बहुत सम्भव था कि ये उतनी मनोरञ्जक, उपयोगी एवं प्रभावोत्पादक न हो पातीं। इसीलिये प्रारम्भ में मेरा विचार इसका संकलन प्रकाशित करने का नहीं हो रहा था। किन्तु विभिन्न कवि-सम्मेलनों में जब अनेक श्रोताओं ने मुझसे ऐसे संकलन की माँग की तथा अनेक मित्रों ने भी आग्रह किया तो मैंने निश्चय किया कि छोटा ही सही किन्तु एक संकलन प्रकाशित कर ही दिया जाय। इसीलिये हमने इस संकलन में प्रायः ऐसी हास्य-व्यंग्योक्तियों को ही स्थान दिया है जो दीर्घजीवी हों तथा पाठकों को भी सार्वकालिक हास्य और व्यंग्य की अनुभूति करा सकें।

प्रयास यही है कि आज के सामयिक मूल्यों और सन्दर्भों को व्यंग्य के माध्यम से स्पर्श किया जाय। इसीलिए इन श्लोकों में अभिव्यक्त भाव आपको अपने जीवन के आसपास ही मिलेगा। इस दृष्टि से व्यंग्य संख्या ३-५, ६-१०, १६, २६, ३६, ३८, ४१, ४५ ६६, १०३, १०८, १३४ १६१ आदि द्रष्टव्य हैं।

भारतीय भाषाओं की पत्रिकाओं में प्रकाशित हास्य-व्यंग्य-साहित्य की रचनाओं को देखकर तथा उनसे प्राप्त प्रेरणा के आधार पर किया गया यह प्रयास संस्कृत-साहित्य में मौलिक ही है। आशा है पाठकों को यह रुचिकर एवं मनोरञ्जक लगेगा।

अर्थावबोध में सरलता एवं सहजता बनाये रखने के लिये ही विभिन्न श्लोकों में अनेक प्रचलित संस्कृतेतर शब्दों, जैसे–सीमेन्ट, कुर्सी, रेल, मोटर आदि को यथारूप ही ग्रहण करने के साथ ही कतिपय स्थलों में सन्धि आदि के नियमों के पालन में शिथिलता भी बरती गयी है। आशा है विद्वज्जन इसे अन्यथा रूप में नहीं देखेंगे।

## कृतज्ञता और आभार

यहाँ मैं अपने कुछ अन्तरंग मित्रों एवं उन प्रशंसकों तथा प्रोत्साहकों के प्रति कृतज्ञता व्यक्त करना अपना कर्त्तव्य समझता हूँ जिनकी बारम्बार

की प्रेरणा एवं प्रोत्साहन से ही यह संकलन आपके समक्ष प्रस्तुत हो सका है। इन शुभचिन्तकों में प्रमुख हैं—प्रयाग विश्वविद्यालय के प्राध्यापक डा० राजेन्द्रमिश्र, सी एस.एन. कालेज हरदोई के प्राचार्य डा० घनश्याम तिवारी, लखीमपुर संस्कृत परिषद् के मन्त्री आचार्य बाबूराम अवस्थी तथा मेरे अभिन्न मित्र एवं रणवीर रणञ्जय कालेज अमेठी के संस्कृत-प्राध्यापक डा० ज्वलन्त कुमार शास्त्री।

इस सन्दर्भ में डा० घनश्याम जी तिवारी विशेष रूप से इसलिए भी उल्लेखनीय है कि विभिन्न कवि-सम्मेलनों में हास्य-व्यंग्य की कमी को देखकर तथा मेरी रचनाओं में व्यंग्य की तीव्रता को अनुभव करते हुए मुझे इस क्षेत्र विशेष में ही कार्य करने का सुझाव देते हुए प्रेरित किया जिससे मैं भी कविसम्मेलनों में मुख्यतः हास्य-व्यंग्य-प्रधान रचनायें प्रस्तुत कर इस विधा का प्रतिनिधित्व करने में समर्थ हो सका।

उ०प्र० संस्कृत अकादमी लखनऊ ने इस ग्रन्थ के प्रकाशन में ४०००.०० चार सहस्र रुपये का जो सात्विक सहयोग हमें प्रदान किया है-उसके लिये हम अकादमी के अध्यक्ष श्री पं० करुणापति त्रिपाठी एवं निदेशक श्री धर्मनारायण त्रिपाठी के प्रति विशेष आभार व्यक्त करते हुए अकादमी के अन्य अधिकारियों के लिये भी हम हृदय से धन्यवाद तथा आभार व्यक्त करते हैं।

इसके साथ ही मैं अपने परम मित्र अग्रज तुल्य आदरणीय श्री डा० प्रकाशमित्र शास्त्री का भी चिरकृतज्ञ हूँ—जिन्होंने समस्त प्रकाशकीय व्यवस्थाओं के भार-वहन के साथ-साथ अपनी विद्वत्तापूर्ण सम्पादन-कला का उपयोग करते हुये अनेक स्थलों का परिमार्जन एवं युक्त संशोधन कर इस पुस्तक को परिष्कृतरूप प्रदान करने में सहयोग प्रदान किया है।

अन्त में मैं अपने पाठकों एवं समालोचकों से पुनः निवेदन करना चाहूँगा कि अपनी प्रतिक्रियाओं से मुझे अवश्य अवगत करायें तथा दोषों की ओर भी संकेत करें-जिससे कि भविष्य में उनका परिमार्जन किया जा सके।

संस्कृत का विनम्र सेवक

**(डा०) प्रशस्यमित्र शास्त्री**

बी २९ आनन्दनगर, रायबरेली (उ०प्र०)

## अथ मङ्गलम्

ओं विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ॥

—o—o—o—

## प्रार्थना

विश्वानि देव सवितर्दुरितानि यानि
तान्येव धेहि मयि त्वं कृपया यथाऽहम् ।
ज्ञात्वा सदा बहुविधं निजदोषवृन्दं
दोषज्ञराजपदवीं भुवि धारयेयम् ॥

—o—o—o—

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम्
मिष्ठान्नभोजनात्पूर्वं तिक्तान्नभोजनं यथा ।

हास्य-व्यङ्ग्यप्रसङ्गेन कालो गच्छति धीमताम्
मद्यपानेन मूर्खाणां तम्बाकूभक्षणेन वा ।



यदि—

साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः

तर्हि—

साहित्यसंगीतकलासुयुक्तः किं स्यात् पशुः पुच्छविषाणयुक्तः ।



## १. रमन्ते तत्र देवताः

भार्यायाः पादसंवाहं वस्त्रप्रक्षालनादिकम्,
प्रत्यहं वीक्ष्य कुर्वन्तं देवदत्तं मनस्विनम् ।
पप्रच्छुः कारणं तत्र सखायो विस्मिता यदा,
असौ तान् उक्तवानेवं तदा गंभीरया गिरा ।
देवान् प्रीणयितुं काङ्क्षे शास्त्रेषु कथितं यथा,
"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ॥

## २. उभौ तौ न विजानीतः

हत्याया अभियोगो हि यदा सिद्धोऽभवत् तदा,
न्यायाधीशोऽभियुक्ताय मृत्युदण्डं प्रदत्तवान् ।
मृत्युदण्डं समाकर्ण्य त्वभियुक्तोऽपि निर्भयः,
न्यायाधीशमुवाचैवं वचनं शास्त्रसम्मतम् ।
हत्या कृता न कस्याऽपि, न च हन्तुमहं क्षमः,
अज्ञानपारवश्येन त्वयाऽहं दण्डितोऽधुना ।
हत्याऽभियोगादेतस्मान्मुञ्च मां ज्ञानवान् भव,
त्वादृशानेव गीतायां भगवानपि चोक्तवान् ।
"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्,
उभौ तौ न विजानीतो नाऽयं हन्ति न हन्यते" ॥

## ३. विषस्य विषमौषधम्

उत्कोचग्रहणे कश्चिन्निगृहीतो यदा भवेत्,
उत्कोचमेव दत्त्वाऽयम् अभियोगाद् विमुच्यते ।
उत्कोचस्याऽभियोगस्य कुर्यात्तेनैव नाशनम्,
पण्डितैः सत्यमुक्तं यद्'विषस्य विषमौषधम्' ।।

## ४. गंगामातुरियं कृपा

प्रत्यहं तव गौः दुग्धं ददाति लीटरद्वयम्
विक्रीणासि कथं तावत् तदा त्वं लीटरत्रयम् ?
क्रेतुः प्रश्नमिमं श्रुत्वा गोपालः प्रत्युवाच यत्,
गंगामातुः कृपा, सर्वं तत्प्रभावेण सिध्यति ।।

## ५. सीमेन्टं नैव प्राप्यते

सीमेण्टस्य नवा फैक्ट्री योजनायां हि स्वीकृता,
तदभावं निराकर्तुं यथाशीघ्रं प्रयत्नतः ।
दुःखमेतत् परं तावद् वर्त्तते महदत्र यत्,
फैक्ट्रीभवननिर्माणे सीमेन्टं नैव प्राप्यते ।।

## ६. भार्येयं त्रिमुखी स्मृता

प्रारंभिकत्रिवर्षेषु विवाहाऽनन्तरं सखे !
विद्यते पतये तावत् पत्नी चन्द्रमुखी सदा ।
ततो वर्षत्रयं यावद् अस्ति सूर्यमुखी च सा,
प्राप्ते तु सप्तमे वर्षे पत्नी ज्वालामुखी भवेत् ॥

## ७. मृग्याः सिंहः पलायते

कार्यालये तु वेपन्ते यद् भयात् कर्मचारिणः
वीरविक्रमसिंहोऽभूत् नाम तस्य नरस्य वै ।
गृहे भार्याभयादेष उच्चैरपि न भाषते,
पूर्वजैः सत्यमुक्तं यत् 'मृगात् सिंहः पलायते' ॥

## ८. त्वं हि नो रुचिरा भवेः

भर्त्सयन्ती पतिं पत्नी सरोषा निजगाद यत्,
तवाऽऽनीतं किमप्यत्र वस्तु नो रुचिरं भवेत् ।
प्रत्युवाच पतिः-देवि ! सत्यमुक्तं त्वया यतः,
त्वमप्यत्र मयाऽऽनीता तथैव प्रतिपद्यसे ॥

## ९. परस्परं भावयन्तः

दस्यवो राजनेतॄणां छायामाश्रित्य वर्धिताः,
नेतारश्चाऽपि दस्यूनाम् आश्रयेण प्रफुल्लिताः ।
शास्त्रसिद्धम् इदं कार्यं ये निन्दन्ति विरोधिनः,
वराकास्ते न जानन्ति रहस्यं परमं यतः ।
गीतायां भगवान् कृष्णः स्वयमेवोक्तवांस्तथा,
"परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" ।।

## १०. यथासंख्यं यथाक्रमम्

पूर्वं साधारणं पत्रं तत्पश्चात् तारपत्रकम्,
प्राप्याऽऽश्चर्यं न कर्त्तव्यं श्रूयतामत्र कारणम् ।
पाणिनेरस्ति निर्देशो यथासंख्यं यथाक्रमम्,
डाक-तारविभागस्य प्रवृत्तिरपि वै तथा ।
प्रमाणं पाणिनिं कृत्वा कार्यमेव करोत्यतः
पूर्वमायान्ति पत्राणि तत्पश्चात् तारपत्रकम् ।।

## ११. वने सीता कथं गता ?

त्यक्त्वा राजसुखं सर्वं नानाभोग्यसमन्वितम्,
रामेण सह सीताऽपि वद कस्माद् वनं गता ?
एकयैव गृहे श्वश्र्वा निर्वाहो दुष्करो यदा ।
त्रि-श्वश्रूणां भयादेव ध्रुवं सीता पलायिता ॥

## १२. द्रौपदी पञ्चभर्तृका

द्यूतक्रीडानिमग्नं तु दृष्ट्वा सातिशयं पतिम्,
यदा न्यवारयत् पत्नी रुष्टः पतिरुवाच यत् ।
युधिष्ठिरो धर्मराजो यदि दीव्यति द्वापरे,
तथा क्रीडाम्यहं द्यूतम् आपत्तिस्तत्र ते कथम् ?
पत्युस्तद् वचनं श्रुत्वा पत्नी शान्तमुवाच यत्,
विस्मर्त्तव्यं च नाऽप्येतत् तत्पत्नीपञ्चभर्तृका ॥

## १३. पतिः किं कथयिष्यते ?

विद्वभिर्वाहनं लक्ष्म्या उलूक इति कथ्यते ?
वाहनं गृहलक्ष्म्याश्च किं तदा कथयिष्यते ?

## १४. किमाश्चर्यमतः परम्

महाराष्ट्रम्

अस्माकं भारतं वर्षं राष्ट्रमेकं निगद्यते,<br>
राष्ट्रेऽप्यस्ति महाराष्ट्रं किमाश्चर्यमितःपरम् ॥

राजस्थानम्

राजतन्त्रं विनष्टं च प्रजातन्त्रं समागतम्,<br>
राजानो राज्यहीनास्ते स्थानभ्रष्टास्तथाऽभवन् ।<br>
राज्ञां स्थानं भवेद्यत्र राजस्थानं तदुच्यते,<br>
राजस्थानं प्रजातन्त्रे किमाश्चर्यम् अतः परम् ॥

उत्तरप्रदेशः

छात्राणां कृषकाणां च दस्यूनां रोगिणां तथा,<br>
वैद्यानां वृत्तिहीनानां बहूनां कर्मचारिणाम् ।<br>
समस्यारूपिणः प्रश्नाः सन्दीप्ताः पीडयन्ति वै,<br>
एतेषामिह प्रश्नानां नाऽस्त्येकमपि चोत्तरम् ।<br>
श्रूयते चैव सर्वत्र कथयन्ति जनास्तथा,<br>
उत्तराणां प्रदेशोऽयं किमाश्चर्यमतः परम् ?

## १५. बहून्यायान्ति यान्ति च

**प्रेमी-**

न चेदद्य मया सार्धं विवाहं त्वं करिष्यसि,
सुप्त्वाऽत्राऽहं मरिष्यामि स्टेशने रेलवर्त्मनि ।

**प्रेमिका-**

मरणे शीघ्रमेतावत् कृपया मा मतिं कृथाः,
प्रत्यहं ट्रेनयानानि बहून्यायान्ति यान्ति च ।।

## १६. त्रिपत्नीस्त्वं समीहसे ?

पतिः-

अस्मदीयः सुपुत्रोऽयं सुशीलः सत्त्वसंयुतः,
राम इव पितुर्भक्तो भूयादित्येव कामये ।

पत्नी-

जानामि तव चातुर्यं तत्र मा भूमिकां कृथाः,
स्वयं दशरथो भूत्वा त्रिपत्नीस्त्वं समीहसे ?

## १७. शृंगाररस उच्यते

साहित्ये त्वस्ति बीभत्सं निष्ठ्यूतस्याऽवलेहनम्,
साम्प्रतं राजनीत्यां तत् शृङ्गारो मन्यते बुधैः ।।

## १८. जागरूकः प्रसुप्यति

'जागरणम्' इति ख्यातं पत्रमासीत्तु दैनिकम्,
तस्य सम्पादकं केचित् साक्षात्कर्त्तुं यदागताः ।
कार्यालये तु पत्रस्य सूचितं कर्मचारिणा,
सम्पादकमहाभागः शेते सम्प्रति निद्रया ॥

## १९. नरकं पालयत्यसौ

नगरपालिका त्वेवं घोषणां लेखयत्यहो !
मलेरियाज्वरं नूनं मशकाः प्रथयन्ति वै ।
विचार्यतां भवांस्तावन्मशकान् दुःखदायकान्,
नगरे रोगहेतूंस्तान् प्रसारयति कः पुनः ? ॥

## २०. आश्वासनं च फलितम्

जलौघेन समस्ता हि ग्रामा आप्लाविता यदा,
एतद् वीक्ष्य तदा नेता भाषणे त्वेवमुक्तवान् ।
पानीयस्य व्यवस्था च ग्रामे-ग्रामे विधास्यते,
यथोक्तं घोषणापत्रे तत्तु सम्पादितं मया ॥

## २१. यदा रूप्याणि प्राप्नुयाम्

पतिः –

प्रसन्ना भव हे देवि ! त्वत्कृते त्वद्य वै मया,
निजजीवनबीमा च लक्षरूप्येषु कारिता ।

पत्नी –

हर्षस्य विषयः कोऽत्र ? हृष्टता तु तदैव स्यात्,
यद्दिने तानि रूप्याणि शीघ्रं सम्प्राप्नुयाम् अहम्।।

## २२. स्वतन्त्रे भारते जातः

पिता–

यदाऽहं त्वादृशोऽभूवम् पित्रोराज्ञां निरन्तरम्,
पालने तत्परश्चाऽसम् भ्रातुराज्ञां तथैव च ।
तादृशी न प्रवृत्तिस्ते न चाऽऽज्ञामिह कस्यचित्,
त्वं पालयसि किंचाऽत्र कारणं ब्रूहि पुत्रक! ।

पुत्रः–

सम्पीडिते पराधीने संजातो भारते भवान्,
स्वतन्त्रे भारते चाऽहं जात इत्येव कारणम् ।

## २३. वैचित्र्यं किमतः परम्

स्वदेशनिर्मितानां हि वस्तूनामेव सर्वदा,
क्रयश्च विक्रयश्च स्याद् उपयोगस्तथैव च।
एनं विषयमालम्ब्य प्रतिपादनतत्परा,
छात्राणां भाषमाणानां याऽभवत्प्रतियोगिता ।
तत्राऽऽसन् ये विजेतारस्तेभ्य आयोजकैस्तदा,
दत्ता निर्झरलेखन्यः चीन-जापाननिर्मिताः ॥

## २४. पातिव्रत्यकथा नवा

गेहस्थो व्याकुलो भृत्यः सद्य आगत्य स्वामिनीम्,
ससम्भ्रमम् उवाचाऽथ वर्णयन् घटनामिमाम् ।
संज्ञाहीनो गृहद्वारे पतितो दृश्यते भुवि,
हस्तयोर्धारयन् स्वामी नूतनम् एकपैकिटम् ।
तच्छ्रुत्वा च सहर्षं सा स्वामिनी प्रत्युवाच यत्,
अहो! तत्पैकिटे नव्या शाटिका मे भविष्यति ॥

## २५. धूम्रदानं करोम्यहम्

यात्रिणं धूम्रपानं हि कुर्वन्तम्परिचालकः,
प्राह मोटरयानेऽस्मिन् धूम्रपानं विवर्जितम् ।
प्रत्युवाच तदा यात्री परिचालकमञ्जसा,
करोमि धूम्रपानं नो, धूम्रदानं करोम्यहम् ।।

## २६. पुण्यदा नागपञ्चमी

कदाचिदपि मित्रत्वे येनाऽद्यावधि कुत्रचित्,
चायपानार्थमप्येकं मित्रं न निमन्त्रितम् ।
साग्रहं दुग्धपानार्थं नयन्तं मित्रमण्डलम्,
देवदत्तमुवाचैवं सखा कश्चन विस्मितः ।
कृपण! ब्रूहि को हेतुर्येनाऽद्य देवदत्तक !
निमन्त्रयसि सर्वाणि मित्राणि दुग्धपीतये ।
मित्राणां वचनं श्रुत्वा देवदत्तः सुधीस्तदा,
मन्दं मन्दं विहस्यैवम् प्रत्यूचे मित्रमण्डलम् ।
भो मूर्खाः! किं न जानीध्वे दुग्धदानस्य कारणम्
पुण्या तु तिथिरद्यैव वर्त्तते नागपञ्चमी ।।

## २७, वृत्तमेतत् पुरातनम्

एकस्मिन् दैनिकेपत्रे कश्चिन्नेता महामनाः,
निजाम् आलोचनां तीक्ष्णां दृष्ट्वाऽत्यन्तमकुप्यत ।
स समाचारपत्रस्य गत्वा कार्यालये तदा,
सम्पादकमुवाचैवं क्रुद्धः सरोषया गिरा ।
भवतां दैनिके पत्रे मुद्रितो वर्त्तते कथम् ?
धूर्त्तोऽहम् अतिनीचोऽहम् भ्रष्टाचारिशिरोमणिः ।
तस्य तद्वचनं श्रुत्वा प्राह सम्पादकस्तदा,
अन्यस्य कस्यचित् पत्रे मुद्रितोऽयम् भवेद् यतः ।
अस्माकं दैनिके पत्रे कदाचिदपि नैव भोः !
एवंविधाः समाचाराः प्रकाश्यन्ते पुरातनाः ॥

## २८. प्रेमिकाः कुसुमानि वा ?

उवाचैवं सखीम् एका नवोढा सुस्मिताऽऽनना,
पुष्पाणि बहु रोचन्ते मन्ये मत्पतये यतः ।
रजन्याम् एष निद्रायाम् मन्दं वक्ति मुहुर्मुहुः,
माधवी–केतकी–चम्पेत्यादिनामानि प्रायशः ।

## २९. नेता सर्वत्र पूज्यते

विद्यावत्त्वं च नेतृत्वं नैव तुल्यं कदाचन,
गृहेऽपि नाऽर्च्यते विद्वान्, नेता सर्वत्र पूज्यते ।
विद्यारम्भे विवाहे च दुर्भिक्षे जनविप्लवे,
रोगे शोके जलौघे च नेता सर्वत्र व्यापकः ।

ज्ञानविज्ञानगोष्ठीषु मुख्यवक्ता भवत्यसौ,
पतिः सर्वसभानां च सर्वज्ञानमयो हि सः ।

वित्तं गृह्णाति श्रेष्ठिभ्यो मतं गृह्णाति निर्धनात्,
सर्वं भोग्यं नयत्येष तस्मान्नेताऽयमुच्यते ।

असारे खलु संसारे नेता सर्वार्थसाधकः,
रमन्ते सुखभोग्येषु नेतृत्वम्प्राप्य मानवाः ॥

## ३०. छत्रस्य दीर्घजीवनम्

मूल्यं किमस्य छत्रस्य क्रियत्कालं चलिष्यति ?
क्रेतुः प्रश्नमिमं श्रुत्वा विक्रेता तमुवाच यत् ।

निवारयाऽऽतपादेतत् क्लेदनात् परिवर्जय,
छत्रं विंशतिरूप्यकाणां चिरकालं चलिष्यति ॥

## ३१. पत्यौ तस्याः पराक्रमः

पुलिस-अधिकारी-

देवि ! प्रशंसकस्तेऽहं यद् रात्रौ सहसा त्वया ।
अन्धकारेऽप्ययं चौर आक्रम्य विनिपातितः ।।

महिला--

पुरुषोऽयं भवेत् चौर इति नैवं विचारितम् ।
अहं ज्ञातवती त्वेतत् पतिरेष भविष्यति ।।

## ३२. कर्कशात्वप्रभावोऽयम्

पतिः कश्चित् कदाचित्तु प्रोवाच कलहप्रियाम्,
पत्नीमेवं निजां तावदनुभूतां व्यथाकथाम् ।
श्मशाने त्वहं यदाऽभूवं चत्वारः प्रेतमानवाः,
विलोक्यैकाकिनं मां तु भीतं कर्त्तुं समुद्यताः ।
तत्राऽहं किञ्चिदुद्विग्नस्तानुच्चैः प्रोक्तवाँस्तदा,
कृपया स्थीयतां तावत् पत्नीमाकारयाम्यहम् ।
नामग्राहं ततोऽहं ते कृत्वा चाऽऽहूतवान् यदा,
तच्छ्रुत्वा सत्वरं प्रेताश्चत्वारस्ते पलायिताः ।।

## ३३. जयतात् तुलसी सदा

समारोहे च तुलसीजयन्तीत्यभिधे क्वचित्,
नेता कश्चिदुवाचैवं स्वीयोद्घाटनभाषणे ।
तुलसीनामधेयं तु श्रद्धेयं स्तुत्यमेव च,
गृहे गृहे च कर्त्तव्यं तुलसीपूजनं तथा ।
प्रातरुत्थाय माता मे प्रत्यहं पूजयत्यहो,
तुलसीवीरुधं नित्यं सर्वदाऽऽरोग्यवर्धनम् ।
प्रतिश्याये विशेषेण चायपाने तथैव च,
तुलसीदलं सेवनीयं जयतात् तुलसी ततः ॥

## ३४. परधर्मो भयावहः

दास्यवं मन्यमानं तु निकृष्टं कर्म चैकदा,
दस्युः कश्चिद् यदाऽगच्छत् कर्त्तुमात्मसमर्पणम् ।
नेता कश्चित्तदाऽऽगत्य प्रोवाच स्निग्धया गिरा,
निवारयन् दस्युमेनं तस्माद् आत्मसमर्पणात् ।
निर्वाचनं न जेस्यामि त्वद्विनाऽहं कथंचन,
पश्यामि न च कल्याणं तवाऽप्यन्यत्र कर्मणि ।
कृष्णश्चाऽपि गीतायां भगवानुपदिदेश यत्,
"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" ॥

## ३५. नाऽऽत्मने याचते बाला

प्रत्यहं षोडशी काचित् पत्रपुष्पकरा शुभा,
सश्रद्धं मन्दिरे गत्वा प्रार्थयत्येवमीश्वरम् ।
न मे याच्ञाऽस्ति हे देव! काचिदप्यात्मने, परम्
जनन्यै कृपया कश्चिज्जामाता दीयतां मम ।।

## ३६. निन्दकं निकटं रक्षेत्

गृहे तिष्ठति मे पत्नी प्रेमिकां सा च निन्दति,
गृहाद् बहिश्च भार्यां तु निन्दति प्रेमिका सदा ।
नाऽत्र दोषं हि पश्यामि प्रेमिकापालने यतः,
'निन्दकं निकटं रक्षेत्' इति विद्वद्भिरुच्यते ।।

## ३७. वन्दे पण्डितमण्डलम्

न्यायशास्त्रविदं वन्दे स्त्रीसभामध्यगोऽपि यः,
लिङ्गस्यैव परामर्शं कुरुते धूमदर्शने ।
वैयाकरणमिच्छामि नमस्कर्तुं ततः परम्,
मुखे यस्य निवासः स्यात् सर्वदा धातुलिङ्गयोः ।।

# ३८. परिभाषा नवाः पश्य

**विद्यालयः–**

आन्दोलनप्रवृत्तीनाम् आलयो यस्तु सर्वदा,
विद्यायास्तु लयो यत्र तस्माद् विद्यालयः स्मृतः।

**परीक्षा–**

परितः पुस्तकस्तोमं धृत्वा प्रश्नसमार्धये,
अनुक्रियार्थम् ईक्षा या परीक्षा सैव कथ्यते।

**छात्रः (छत्रस्य विकारः)**

वस्त्रम् आच्छादकं दूरे कृत्वा छत्रस्य सर्वथा,
विकाररूपं तद्दण्डं नीत्वा पाणौ च केवलम्।
दण्डवद् गुरुभिः सार्धं प्रवृत्तो यस्तु साम्प्रतम्,
विश्वविद्यालयेष्वेवं सखे ! छात्रत्वम् आगतम्।

**अतिथिः–**

आयाति निश्चिते काले किन्तु नाऽस्त्येव निश्चिता,
प्रस्थानाय तिथिर्यस्य तस्माद् अतिथिरुच्यते।

**दर्शनशास्त्रम् –**

यत्प्रयोगेण धनिनो निर्धनान् शिक्षयन्ति यत्,
दुःखदं नाऽस्ति दारिद्र्यं तद् वै दर्शनशास्त्रकम्॥

## ३९. न स्मरामि मुखाकृतिम्

प्रेमिणं प्रेमिका काचित् पत्रमेवं लिलेख यत्,
प्रत्यावर्त्तय मे छायाचित्रं क्रोधसमन्विता ।
बह्वीनां सुन्दरीणां च चित्राणां सञ्चयं तदा,
सम्प्रेष्य प्रेमिकायै स प्रेमी पत्रे लिलेख यत् ।
छायाचित्रं निजं नीत्वा त्वेतस्माच्चित्रसञ्चयात्,
चित्राण्यन्यानि मत्पार्श्वे कृपया प्रेष्यताम्पुनः ।
अनेकाः प्रेमिकास्तावद् वर्त्तन्ते त्वादृशा अतः,
कथमप्यधुना तेऽहं न स्मरामि मुखाकृतिम् ॥

## ४०. तव पत्नी न याचिता

भिक्षुको द्वारमागत्य प्रोच्चैः प्राह महोदय !
दीयतां कृपया किञ्चित् पीडितोऽहं बुभुक्षया ।
अग्रे गच्छ यतः पत्नी गृहे नाऽस्ति ममाऽधुना,
इत्युक्तवति पत्यौ स भिक्षुको वाक्यमब्रवीत् ।
रोटिकां भोक्तुमिच्छामि तद्भवान् दातुमर्हति,
उदारचेतसस्तेऽहं पत्नीमिच्छामि नाऽधुना ॥

## ४१. ब्रह्म सत्यं जगन्मिथ्या

निर्गुटाऽऽन्दोलने जाताः सदस्या इह भारते,
एकाधिकशतं देशा इति सर्वत्र श्रूयते ।
अमरीकागुटे भक्तिं कुरुते यो निरन्तरम्,
पाकिस्तानोऽप्ययं जातः सदस्यो निर्गुटेऽधुना ।
रूसदेशोऽपि वाञ्छेत निर्गुटस्य सदस्यताम्,
तद् दृष्ट्वा चाऽमरीकाऽपि निर्गुटं संश्रयिष्यति ।
एवं विश्वं समग्रं चेत् निर्गुटं सम्भवेत्तदा,
'तत्र कः शोकः को मोह एकत्वमनुपश्यतः' ।
बमाद्यस्त्रप्रयोगोऽपि सर्वेभ्यो भविता यतः,
"उदारचरितानां तु वसुधैव कुटुम्बकम्" ।
अण्वस्त्राणां प्रयोगेण हानिः काऽपि न स्याद् यतः,
'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नाऽपरः'।।

## ४२. स्वास्थ्यं च स्वास्यमन्त्रिणः

उद्घाटनसमारोहे पूर्वनिर्धारिते यदा'
स्वास्थ्यमन्त्री न चाऽऽयातस्तदा केनाऽपि घोषितम्
हृद्रोग - ज्वरपीडाभिर्ग्रस्तो मन्त्रिमहोदयः,
अतीवाऽस्वस्थताहेतोर्नाऽत्राऽऽगन्तुं समीहते ।।

## ४३. सुप्तान्ते वादयिष्यते

'मृदङ्गो मह्यमेको हि कृपया क्रीयतामिति,'
साग्रहं बहुवारं च बालकस्तातम् उक्तवान् ।

पिता—

मृदङ्गः शक्यते क्रेतुं शपथः क्रियतां परम्,
व्यवधानं न मे किञ्चित् मृदङ्गेन भविष्यति ।

पुत्रः--

नैव किञ्चिन्मृदङ्गेन कष्टं ते भविता यतः,
तमहं वादयिष्यामि शयनाऽनन्तरं सदा ॥

## ४४. आहारम् उदरस्थाय

स्वामी ---

मयोक्तं दीयतामेषा शुकाय रोटिका परम्,
दत्तवांस्त्वं बिडालाय न च मे वचनं कृतम् ।

भृत्यः --

उपायस्तु न कोऽप्यासीत् तत्राऽहं करवाणि किम्?
किञ्चित्पूर्वमसौ मुक्तो बिडालेन शुको यतः ॥

## ४५. मदिरालय-मंगलम्

सुरागृहस्य नव्यस्य शुभोद्घाटनपर्वणि,
कुशासने समासीनं मदिरालयस्वामिनम् ।
दर्भपूतं करं कृत्वाऽऽचमनीयजलान्वितम्,
संकल्पं कारयित्वा च पण्डितः प्राह सस्वरम् ।
मंगलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः,
सुवृद्धिं तव कार्येषु सदा कुर्याद् गजाननः ।।

## ४६. न राष्ट्रपतिरायाति

विश्रामभवने कश्चिद् यात्री गत्वा प्रबन्धकम्,
उवाच कक्षमेकं मे कृपया दीयतां भवान् ।
कक्षः कोऽपि न रिक्तोऽस्ति एवमुक्ते प्रबन्धके,
प्रबन्धकमुवाचाऽथ स यात्री स्निग्धया गिरा ।
राष्ट्रपतिरिहाऽद्यैव यदि स्यादागतो तदा,
ब्रूहि दास्यसि तस्मै त्वं कक्षं कमपि वा न वा ?
दास्यामीतिप्रतिज्ञाते तस्मिन्, यात्री स उक्तवान् ।
तमेव कक्षं मे देहि यतो नाऽऽयाति राष्ट्रपः ।।

## ४७. अवतारो मसीहस्य

निरीक्ष्य महिलां वैद्यो ज्ञात्वा गर्भवतीं च ताम्,
प्राह यत्कृपया शीघ्रं पतिं सूचयतामिति ।
चिकित्सकवचः श्रुत्वा महिला प्रत्युवाच यत्,
कथम् पतिं सूचयेयं यतो नाऽहं विवाहिता ।
तस्या उत्तरमाकर्ण्य—उक्तवान् स चिकित्सकः,
अस्तु तर्हि स्वकीयं त्वं प्रेमिणं सूचितं कुरु ।
प्रेमी चाऽपि न कोऽप्यस्ति ममेत्युक्ते चिकित्सकः,
उक्तवानथ तां देवीं सरोषं खिन्नमानसः ।
एवं तर्हि स्वकीयौ त्वं पितरौ सूचयस्व यत्,
श्रीमान् उत्पत्स्यते कश्चिन् मसीहो भवतां गृहे ।।

## ४८. नेतुः प्राणा मते स्थिता

निर्वाचने यदा नेता प्राप्तुकामो मतं स्वयम्,
विधातुं जनसम्पर्कं निर्जगाम बहिर्गृहात् ।
हृदयं शक्यते दातुं मतं किन्तु न याच्यताम्,
इति प्रेमिकया प्रोक्तः पपात मूर्च्छितो भवन् ।।

## ४९. वृण्वन्नपि शृणोति न

बहुकालात् सखीं काञ्चित् दृष्ट्वा हर्षसमन्विता
नवोढा तामुवाचैवं स्वपत्युर्विषये तदा ।
ताराश्चन्द्रमसं चाऽपि त्वत्कृते गगनादहम्,
आनेष्यामीति येनोक्तं बहुवारं मुहुर्मुहुः ।
सोऽधुना शाटिकामेकाम् उक्तेऽपि नाऽऽनयत्यहो
विवाहाऽनन्तरं मर्त्यः शृणुते न कदाचन ।।

## ५०. आयाहि श्वस्तने दिने

भिक्षुकः कश्चिदागत्य प्रोवाच गृहस्वामिनीम्
बुभुक्षितोऽहं किञ्चिन्मे कृपया देहि भोजनम् ।
तस्य तद्वचनं श्रुत्वा पप्रच्छ गृहस्वामिनी,
उच्छिष्टभोजनं तावद् भोक्तुं शक्नोषि वा न वा?
उच्छिष्टमपि शक्नोमि गृहीतुं देवि ! भोजनम्
इत्युक्ते भिक्षुके तस्मिन् स्वामिनी प्रत्युवाच यत् ।
समाप्तं भोजनं त्वद्य न किञ्चिदपि वर्त्तते,
उच्छिष्टं दास्यते तुभ्यम् आयाहि श्वस्तने दिने ।

## ५१. नगरे जलसंकटम्

नगरे निश्चितं जातं महत् पानीयसंकटम्,
अनुभूतं मयाऽप्यद्य दृष्ट्वा दुग्धं यदागतम् ।
गोपालः प्रत्यहं दुग्धे जलं मिश्रयते परम्,
शुद्धं दुग्धमदाद् अद्य जलसंकटकारणात् ।।

## ५२. किं भ्रष्टा मन्त्रिणः स्मृताः ?

भ्रष्टाचारं वर्द्धमानम् उन्मूलयितुमिच्छुकः,
युवकानां महासंघो निर्णयं कृतवान् इमम् ।
भ्रष्टाचारेषु लिप्ता ये नरास्तेषाम् इतः परम्,
सार्वजनिकरूपेणापमानो हि विधास्यते ।
आकर्ण्य घोषणामेनां शासनेन च मन्त्रिणाम्,
सुरक्षाया व्यवस्था तु महती सुदृढा कृता ।।

## ५३. युद्धं संसदि चाऽऽवयोः

निर्वाचने संसदीये पति-पत्न्यौ परस्परम्,
भूत्वा प्रत्याशिनौ क्वाऽपि सभायाम् एवमाहतुः ।
यथा योत्स्यामहे गेहे संसद्यपि तथा वयम्,
जनताहितरक्षार्थं गत्वा योत्स्यामहे सदा ।।

## ५४. निजमातुर्गृहं गता

पतिम् उक्तवती पत्नी गृहयुद्धेन पीडिता,
मातुर्गेहं गमिष्यामि सम्प्रत्यद्यैव निश्चितम् ।

पतिः प्रत्युवाच—

तव माता गृहे नाऽस्ति निरर्थं गमनं यथा,
असावपि पतिं युद्ध्वा निजमातुर्गृहं गता ।।

## ५५. न कथं सदृशः पितुः ?

भवांस्तु बहुविख्यातः कविः साहित्यसर्जकः,
पुत्रश्च भवतामेष न कथञ्चिद् भवादृशः ।

कविः प्रत्युवाच—

पुत्रोऽयं मम संस्कारैर्नाऽभूत् प्रभावितो यतः,
जन्माऽनन्तरमेतस्य प्रसिद्धिरर्जिता मया ।।

## ५६. लघ्वीं शंकां चिकीर्षामि

उवाचाऽध्यापकं छात्रः कक्षायामेकदा पठन्,
लघुशङ्कां चिकीर्षामि श्लोकेऽस्मिन् अनुमन्यताम् ।

प्राध्यापक ऊचे ·

यावन्नाऽहं समाप्नोमि श्लोकार्थम् इममुत्तमम्,
लघुशंकां निजां रक्ष मुखे तावद् यथासुखम् ।।

## ५७. मातुराज्ञां करोम्यहम्

सार्धं प्रेमिकया यत्र देवदत्तो विराजते,
प्रेमिकाया लघुभ्राता तत्रैवाऽऽगत्य संस्थितः ।
'गच्छ दूरमितः शीघ्रं' यदा प्रोक्तवती स्वसा,
तदा तस्य लघुभ्राता दशवर्षीय उक्तवान् ।
यावत् ते भगिनीं त्यक्त्वा नाऽसौ दुष्टो प्रयाति भोः!
तावत्त्रोपवेष्टव्यम्' इति माता जगाद माम् ।।

## ५८. वर्तते बधिराऽप्येषा

देवदत्तं विवाहार्थं कन्यां दर्शयितुं यदा,
नीत्वा कश्चित् सखा तस्य जगाम कन्यकागृहे ।
देवदत्तस्तु तां कन्यां दृष्ट्वाऽसन्तुष्टमानसः,
शनैः कर्णाऽन्तिकं तत्र मित्रमेवम् उवाच यत् ।
'वर्तते सुन्दरी कन्या' इति पूर्वं त्वमुक्तवान्,
किन्त्वेषा वर्तते कीदृक्कुरूपाऽशोभना तथा ?
सखा तद्वाचमाकर्ण्य देवदत्तमुवाच यत्,
किं ब्रवीषि शनैरत्र वर्तते बधिराऽपि सा ।।

## ५९. स्यातां कौ मध्यमोत्तमौ

प्रथमायां निशायां वै विवाहाऽनन्तरं पतिम्,
व्याकरणस्य विद्वांसं नवोढा निजगाद यत् ।
प्रथमः पुरुषश्चाऽसि त्वमेव मम जीवने,
संगतः स्नेहसंसिक्त इति सत्यं ब्रवीमिते ।
तस्यास्तद् वचनं श्रुत्वा पप्रच्छ तां पतिस्तदा,
मध्यमः पुरुषः कस्ते ? उत्तमः पुरुषश्च कः ?

## ६०. भूषाहानिस्तु भूषणम्

रसालंकारहीनाऽपि छन्दोगुणनिवारिता,
उचिताऽवसरे प्रोक्ता वाक् पुंसां शोभते तथा ।
रतिकाले तु नारीणां सुन्दरीणां मृगीदृशाम्,
आभूषणविहीनत्वम् एवाऽस्ति भूषणं यथा ॥

## ६१. कारागारे सुखी भवान्

कारागारे बध्यमानं काचित् पत्नी निजं पतिम्,
यत् पत्रं प्रेषयामास तत्रेयम् पङ्क्तिरादिमा ।
अत्राऽहं सर्वथा वर्त्ते प्रसन्ना कुशलान्विता,
मन्ये तत्र भवांश्चाऽपि भवेत् सकुशलः सुखी ॥

## ६२. अनाथास्तु दयायोग्याः

किशोरः कुपितः कश्चिन्मातरं पितरं निजम्,
केनाऽपि कारणेनाऽसौ दुष्टात्मा हतवान् यदा ।
न्यायालये च हत्याया अभियोगे प्रकीर्त्तिते,
न्यायाधीशमुवाचैवं वचनं स तदा रुदन् ।
मन्येऽहम् अपराधी स्यां हत्या चैव कृता मया,
दयतां मुञ्चतां विद्वन्! दयायोग्योऽस्म्यहंपरम् ।
तस्य विलपनं श्रुत्वा न्यायाधीशस्तु पृष्टवान्,
कथं त्वं दयनीयोऽसि ब्रूहि मामत्र कारणम् ।
आकर्ण्य तस्य तद्वाचम् अभियुक्त उवाच यत्,
अनाथास्तु दयायोग्या अनाथोऽहं च साम्प्रतम् ।।

## ६३. कथं वर्णयितुं क्षमम्

परीक्षायां तु कस्याञ्चित् प्रश्न एष समागतः,
कश्मीरस्य प्रदेशस्य सौन्दर्यं वर्ण्यतामिति ।
उत्तरपुस्तिकायां च छात्रेण लिखितं त्विदम्,
सौन्दर्यं वर्णनाऽतीतं कश्मीरस्याऽस्ति सर्वथा ।।

## ६४. मतदानं विशिष्यते

एकदा नैमिषारण्ये दृष्ट्वा पद्मासने स्थितम्,
नारदम् परिपप्रच्छ वाल्मीकिः'मुनिपुङ्गवम्' ।

वाल्मीकिः उवाच-

माहात्म्यं भारते कस्य कृपया ब्रूहि हे मुने !
किं स्यादत्र नमस्कार्यं दानं किं च विशिष्यते ॥

नारद उवाच-

दीनं करोति राजानं विद्वांसं मूर्खमेव च,
माहात्म्यं मतपत्रस्य को न जानाति भारते ।
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्,
राजायोगप्रदात्री सा नमस्या मतपेटिका ।
विद्यादानं क्षुद्रदानं धनदानं ततोऽधिकम्,
सर्वेषामेव दानानां मतदानं विशिष्यते ॥

## ६५. द्वैतेऽद्वैतं करोति यः

सर्वेऽपि धन्विनो लोके भवन्ति द्वैतकारिणः,
एकोऽयं पुष्पधन्वा हि द्वैतेऽद्वैतं करोति यः ॥

## ६६. पश्चात्तापं यथाविधि

पिता—

दुःखमूलं विवाहं तु कृत्वा पितृपितामहैः,
पश्चात्तापो महान् एभिरनुभूतः सदा भुवि।
भूत्वा विवाहितस्तावदहमप्यत्र जीवने,
बहुधाऽनुभवाम्येव पश्चात्तापमहर्निशम्।
अस्मदीयमतं श्रुत्वाऽनुभवं ब्रूहि पुत्रक!
विचारयसि किं तावद् विवाहविषयेऽधुना?

पुत्रः—

परम्परामनुसृत्य भविष्यामि विवाहितः,
पश्चात्तापमहं चाऽपि करिष्यामि यथाविधि ॥

## ६७. त्रयः पुत्रा ममाऽधुना

त्रयोदशानां पुत्राणां पिता कश्चिदधीतवान्,
प्राचीनं वाक्यमेतद् यद् 'दशपुत्रसमो द्रुमः।
वृक्षमेकं समुत्पाटय तदनन्तरमेव सः।
समुद्घोषितवान् 'पुत्रास्त्रय एव ममाऽधुना' ॥

## ६८. प्रतीक्षालयसार्थक्यम्

स्टेशने ट्रेनयानं तु पञ्चघण्टाविलम्बितम्,
श्रुत्वा तत्र नरावित्थं संवदेते परस्परम् ।

प्रथमः--

विलम्बेन चलन्त्येवं ट्रेनयानानि वै यदा,
तदा समयसारिण्याः स्याद् आवश्यकता तु का ।

द्वितीयः--

चलेयुर्निश्चिते काले यदि ट्रेनानि सर्वदा,
प्रतीक्षालयगेहानां सार्थकत्वं कथं भवेत् ।।

## ६९. यौनशिक्षाऽत्र भारते !

याति विद्यालयं छात्रः प्रत्यहं यो विलम्बितः,
तं क्षिप्रं यान्तमालोक्य माता पप्रच्छ कारणम् ।

पुत्र उवाच--

कक्षायाम् अग्रिमो भूत्वा स्थास्यामि प्रथमं यतः,
अद्य प्रथमघण्टायां यौनशिक्षा प्रदास्यते ।।

## ७०. उपनेत्रेण पश्यामि

सोपनेत्रं शयानं वै दृष्ट्वा वृद्धं पितामहम्,
पौत्रः प्राहोपनेत्रं तद् उत्तार्य सुप्यतामिति ।
पौत्रम् ऊचे तदा वृद्धो मम नेत्रे सुदुर्बले,
उपनेत्रं विना स्वप्नाः शक्यन्ते नाऽवलोकितुम् ॥

## ७१. अर्धसत्यां कथां वद

पितामह ! कथामेकाम् एवं श्रावय मामिह,
अर्धमेव तु यत् सत्यम् अर्धं यच्चाऽनृतंभवेत् ।
पौत्रस्याऽऽग्रहमाकर्ण्य वृद्ध ऊचे कथामिमाम्,
कस्मिंश्चिन्नगरे चैकः प्राधिकारी बभूव यः ।
पुलिसस्य विभागेऽपि नियुक्तः किन्तु सर्वदा,
जनानां रक्षकश्चाऽऽसीद् दयालुः न्यान्यकृत्तथा ॥

## ७२. अशान्तिः शान्तिमिच्छता

दशमोटरयानानि रिक्शायानानि विंशतिः,
स्कूटराणि च पञ्चाशद् दग्धानि भवनान्यपि ।
प्रदर्शनं प्रकुर्वद्भिर्ध्यानमाकर्ष्टुम् उद्यतैः,
विधिशान्तिव्यवस्थां तु नगरे स्थापनाय तैः ॥

## ७३. कष्टदः प्रश्न एष मे

पत्नी--

यदि मृत्युरकस्मान्मे भवेदथ च ब्रूहि माम्,
तदा पुनर्विवाहं त्वं रचयिष्यसि वा न वा ?

पतिः--

अस्योत्तरं न दास्यामि कदाचिदपि त्वामहम्,
वर्त्तते कष्टदः प्रश्नो विचित्रश्चाऽपि मे यतः ।
'रचयिष्यामि' चेत्युक्ते त्वं हि रुष्टा भविष्यसि
'ने' त्युक्ते चाऽथ रुष्टा 'सा' भविष्यति न संशयः।।

## ७४. द्विशतं वेतनं यदा

नियोजकः-

नियुक्तिस्तव सञ्जाता कार्यभारं गृहाण च,
कार्यालये समागत्य सहर्षं श्वस्तने दिने ।
वेतनं दास्यते तुभ्यं मासिकं शतरूप्यकम्,
व्यतीते चैकवर्षे तु द्विशतं वेतनं भवेत् ।

नियुक्तः पुरुषः

कार्यार्थम् आगमिष्यामि व्यतीते चैकवत्सरे,
द्विशतम् एव वाञ्छामि मासिकं वेतनं यतः ।।

## ७५. छात्राः परमनिर्भयाः

विद्यालयाद् असन्तुष्टः शिक्षकः कोऽपि चैकदा,
प्रेषयन् त्यागपत्रं स एवं तत्राऽऽह कारणम् ।
प्राचार्यात् शिक्षकाः सर्वे भ्यसन्ते सततं त्विह,
प्रबन्धकाच्च प्राचार्यो बिभेति नियतं तथा ।
प्रबन्धसमितेश्चाऽपि सदस्येभ्यः प्रबन्धकः,
भयभीतः सदा तावद् विद्यालयेऽवलोक्यते ।
प्रबन्धसमितेश्चाऽपि सदस्याः सर्वं एव ते,
अभिभावकसंघाच्च भ्यसन्ते प्रायशोऽधुना ।
अभिभावकाश्च छात्रेभ्यो भीताश्छात्रास्तु निर्भयाः,
विद्यालये न चैतस्मिन् कस्माच्चिदपि बिभ्यति ।।

## ७६. विचित्रं भयचक्रकम्

मूषकः पुरुषाद् भीतो विले तिष्ठति सर्वदा,
पुरुषस्तु गृहे नित्यं निजपत्न्या बिभेति वै ।
पत्नी च मूषकं दृष्ट्वा भयात्तिष्ठति दूरतः,
निर्भयः को भवेदत्र विचित्रं भयचक्रकम् ।।

## ७७. कस्माद् ऋक्षोऽस्ति केशवान्

भल्लूकस्य कथं देहे दीर्घाः केशाः प्रलम्बिताः,
बालकाः! कारणं ब्रूत गुरुरेवं हि पृष्टवान् ।
प्रश्नमेनं समाकर्ण्य बालकः कश्चिदाह यत्,
जंगले नापितो नाऽस्ति तस्माद् ऋक्षोस्तिकेशवान् ।।

## ७८. कीदृशं हस्त-लाघवम्

कश्चन पाकेटमारस्तु निगृहीतो यदाऽभवत्,
मार्गदुर्घटनायां हि मोटरयानचालने ।
पुलिसस्तस्य यानस्य संख्यानामादिकं तथा,
लिखित्वा च यदा स्वस्मिन् डायरीपत्रके गतः ।
तस्मिन्नेव क्षणे हस्त-लाघवेन स डायरीम्,
निःसार्य तस्य पाकेटाद् यानमारुह्य प्रस्थितः ।।

## ७९. शुद्धं ददाति गौर्दुग्धम्

गो-गोपालकयोर्मध्ये कः प्रशस्यतरः स्मृतः ?
श्रुत्वा प्रश्नमिमं पुत्रः पितरम्प्रत्युवाच यत् ।
पशुर्यद्यपि गौरस्ति किन्तु सा श्रेयसी यतः,
शुद्धं ददाति गौर्दुग्धं गोपस्तु जलमिश्रितम् ।।

## ८०. भिक्षार्थं कृपया चल

कश्चन भिक्षुकः क्वाऽपि दृष्ट्वा कमपि सज्जनम्,
उपगम्य ययाचे तम् एकमेवाऽथ रूप्यकम् ।
रूप्यकं नाऽस्ति चेत्युक्ते सज्जने स उवाच यत्,
कृपया रोटिकामेव दीयतां भोक्तुमत्र मे ।
रोटिका चाऽपि नैवाऽस्ति इति चोक्तेऽथ सज्जने,
दीयतां कृपया जीर्णं वस्त्रं किमपि प्राह सः ।
नाऽस्ति वस्त्रम्—इतो दूरमवेहि-यासि वा न वा ?
एवं तिरस्कृतस्तत्र भिक्षुकः समुवाच यत् ।
वस्त्रं चाऽपि न स्यात् तर्हि इह तिष्ठति किं वृथा,
त्वमप्यत्र मया सार्धं भिक्षार्थं कृपया चल ।।

## ८१. सम्मेलनस्य कार्यं किम्

'सम्मेलनम्' इति नाम्ना सा सभा हि निगद्यते,
निर्णयं कुरुते या च कुत्र स्याद् अग्रिमा सभा ।
सम्मेलनं च सफलं तदेव यत्र घोष्यते,
कदा सम्मेलनं चैतद् अग्रिमं सम्भविष्यति ।।

## ८२. निकृष्टो विषयो भवेत्

'मम-आत्मकथा' ह्येतत् पुस्तकं प्राप्य चैकदा,
आलोचकेन ग्रन्थस्य—एवम् आलोचना कृता।
प्रशस्यं सर्वमत्राऽस्ति परम् एकैव न्यूनता,
विषयस्त्वस्य ग्रन्थस्य निकृष्टः प्रतिभाति मे ।।

## ८३. गवां हानिर्न में मता

गोपाल उक्तवान् वैद्यं नीत्वा तत्रौषधिद्वयम्,
ओषधिः काऽस्ति मे गोभ्यो मम पत्नीकृते च का
चिह्नतोऽत्र क्रियतां कश्चित् कृपया ह्यौषधिद्वये,
नाऽहमिच्छामि यद् हानिर्गवां काचिद्भवेन्मम ।।

## ८४. वहामि स्वेच्छया पापम्

सहस्ररूप्यकैः क्रीतं दृष्ट्वा राङ्कवम्[1] उत्तमम्,
पतिरुच्चैः स्वरैः प्राह दुर्व्ययस्त्वेष पातकम् ।
नाथ ! चिन्ता न कर्त्तव्या पत्नी प्रोक्तवती तदा,
सहर्षम्पापमेतत्तु स्वशरीरे वहाम्यहम् ।।

१- दुशाला

## ८५. नेच्छतस्तौ विवाहं मे

प्रेमी बहुतिथं कालम् उपेक्षामकरोद् यदा,
प्रस्तावं प्रेमिकायाश्च विवाहविषयस्य वै ।
एकदा प्रेमिका चाऽसौ हठमेवं चकार यत्,
शीघ्रं ब्रूह्यधुना 'मांत्वम् परिणेष्यसि वा न वा ?'
'परिणेष्यामि किन्त्वत्राऽनुमतिस्तु प्रतीक्ष्यते,
परिवारसदस्यानाम्' इति प्रेमी जगाद ताम् ।
तस्य तदुत्तरं श्रुत्वा पप्रच्छ प्रेमिका तदा,
पिता ते जननी वाऽपि ज्येष्ठो भ्राताऽथवा स्वसा ।
वर्त्तन्ते परिवारे के सदस्या ये च त्वामिह,
नैवाऽनुमतिमिच्छन्ति प्रदातुम् इति ब्रूहि माम् ।
प्रेमिकावचनं श्रुत्वा स उवाच नताऽऽननः,
मम पत्नी च पुत्रश्च विवाहं मम नेच्छतः ॥

## ८६. वित्तमेवाऽस्त्यपेक्षितम्

बहूनि सन्ति वित्तेनाऽतिरिक्तमपि जीवने,
नानामहत्वपूर्णानि वस्तूनि विविधानि वै ।
किन्तु तत्प्राप्तये तावद् अस्मिन्नेव हि जीवने,
सुमहत् वित्तभण्डारं भूय एवाऽस्त्यपेक्षितम् ॥

## ८७. वार्धक्ये नश्यति स्मृतिः

विरतं कारयन् पौत्रम् असत्यवचनात् तथा,
ऊचे पितामहो वृद्धः प्रेरयन् सत्यभाषणे।

पितामहः -

आयुर्व्यतीतमेतावत् न च किञ्चित् स्मराम्यहम्
कदाचिज्जीवने चाऽस्मिन् असत्यं भाषितं मया।

पौत्रः –

नैवाऽऽश्चर्यं किमप्यत्र यतो दीर्घायुषि स्मृतिः,
भवादृशानां वृद्धानां क्षीणा भवति प्रायशः ॥

## ८८. विश्वस्ताः दुर्लभा नराः

न्यायाधीशः -

एतानि चौरकर्माणि त्वमेकः कृतवांस्तथा,
न सहायः कृतः कोऽपि ब्रूहि किंचाऽत्र कारणम् ?

चोरः –

एकाकी क्रियते कार्यं यतो हि सहयोगिनः,
विश्वस्ता नैव प्राप्यन्ते साम्प्रतं पुरुषाः क्वचित्॥

## ८९. कुक्कुराः सन्ति नैव ते

परलाभं न काङ्क्षन्ते विवदन्ते च सर्वदा,
आक्रमन्ते च ते सद्यः परावनतिमिच्छया।
दृष्ट्वा परस्परं तावन्नेत्रैरङ्गारपूरितैः,
दन्तान् कटकटायन्ते क्रुश्यन्ति च यदा तदा।
ब्रूहि के जन्तवस्ते स्युर्येषाम् आचरणं तथा,
ज्ञातं ते कुक्कुराः सन्ति, नो सखे! पण्डितास्तु ते॥

## ९०. आश्रमो ब्रह्मचारिणा

विदेशेभ्यः समायाता भुशुण्डीनलिकाः क्वचित्,
कुत्रचिच्च भुशुण्डीनाम् अन्ये चाऽवयवास्तथा।
रिवाल्वर-समायोगो गोलिकोत्पादनं तथा,
क्वचित् संगीननिर्माणं पिस्तौलादिप्रवर्त्तनम्।
निर्मितानि परीक्ष्यन्ते यस्य परिसरे क्वचित्,
आग्नेयास्त्राणि विविधं शिक्षितैः कर्मचारिभिः।
ब्रूहि स्थानं भवेत् किंतद् यत्र दृश्यं तथाविधम्,
ज्ञातम्-आयुधनिर्माणशाला सा वर्त्तते ध्रुवम्।
न हि भो! न त्वया ज्ञातं सावधानं शृणुष्व यत्,
पवित्रः स तु योगस्याऽस्त्याश्रमो ब्रह्मचारिणम्॥

## ९३. नाऽस्ति वृद्धा इतोऽधिका ?

तिसृणां कन्यकानां च पिता स्नेहसमन्वितः,
विवाहेच्छुकमेकं हि पुरुषं प्रोक्तवानिदम् ।
पञ्चविंशतिवर्षीया कन्या या मम वर्त्तते,
पुरुषो यस्तया सार्धं विवाहं रचयिष्यति ।
तत्कृतेऽहं प्रदास्यामि नानावस्तुपुरःसरम्,
रूप्यकाणां सहस्राणां सहर्षं पञ्चविंशतिम् ।
या त्रिंशद्-वर्षदेशीया सुकन्या मम वर्त्तते,
त्रिंशत्-सहस्ररूप्याणि प्रदास्यन्ते च तत्कृते ।
चत्वारिंशत् सहस्राणि दास्यामि रूप्यकाण्यहम्,
यस्या वर्षाणि जातानि चत्वारिंशद् अथाऽऽयुषः।
श्रुत्वा तस्य वचांस्येवं युवकः पृष्टवाँस्तदा,
पञ्चाशद्वर्षदेशीया काऽपि कन्या नतेऽस्ति किम् ?

## ९४. कीदृक् कालोऽयमागतः

एकस्मिंश्च समारोहे चुम्बन्त्यौ तु परस्परम्,
कुमार्यौ वीक्ष्य वै कश्चिद् आतिथेयमुवाच यत् ।
अहो बत! महद् दुःखं कीदृक्कालोऽयमागतः?
यत् कार्यं शक्यते कर्त्तुम् एकेनैव नरेण तत्,
युवतीभ्यां कुमारीभ्यां मिलित्वाऽत्र विधीयते ॥

## ९१. निर्वाचनं समासन्नम्

दुर्लभा शर्करा नाऽस्ति मृत्तैलं सुलभं तथा,
निर्धनेभ्यो वितीर्यन्ते कम्बला यत्र तत्र च ।

क्वचित् सेतुशिलान्यासः क्वचिदुद्घाटनं तथा,
क्वचिन्नवपथाऽऽरम्भो नवीनोद्योगघोषणा ।

ब्रूहि कालो भवेत् कोऽयम्? ज्ञातं-कृतयुगं हि तत्,
नो सखे! कलिकालोऽयम् आसन्नं तु निर्वाचनम् ।।

## ९२. ऐक्यं सर्वत्र भारते

विचारगोष्ठ्यामेकस्यां नेतारः केऽपि संहृताः,
एतद् विचारयन्तिस्म - ऐक्यं सर्वत्र भारते ।

स्वमतं प्रस्तुवंस्तत्र प्रमाणादिपुरःसरम्,
स्थूलकायो महान् नेता गोष्ठ्यां कश्चिज्जगाद यत् ।

यदाऽहं गतवान् राष्ट्रे कुत्रचिदपि भारते,
राजस्थाने विहारे वा कश्मीरे केरलेऽथवा ।

मनुष्यास्तत्र सर्वत्र दृष्ट्वा मां विहसन्त्यतः,
सिद्धमेतेन यत् सर्वम् एकमेवाऽस्ति भारतम् ।।

## ९५. दलम् अन्यत् समाश्रितम्

पार्टीकार्यालयः कश्चिद् अग्निदाहेन पीडितः,
यदाऽभवत् तदा नेताऽसूचयच्चाऽग्निशामकान् ।
उद्यतास्तत्रचाऽऽगन्तुं यदाऽग्निशामका नराः,
तस्मिन्नेव क्षणे नेता दूरभाषं चकार यत् ।
नाऽस्त्याऽऽवश्यकता चाऽत्र शीघ्रमागमने यतः,
पार्टीमेनाम्परित्यज्य मयाऽन्या संश्रिताऽधुना ॥

## ९६. प्रश्नोऽयं बहु बाधते

प्रत्याशिनम् अपृच्छद् वै मतदाता तु कश्चन,
निर्वाचने जयम्प्राप्य किं करिष्यसि ब्रूहि माम् ।
तस्य प्रश्नं समाकर्ण्य प्रत्याशी प्रत्युवाच यत्,
महत्त्वं लभते नैव प्रश्न एष परन्त्वहम् ।
पराजितो भविष्यामि यदि निर्वाचने तदा,
करिष्यामि किम् इत्येष प्रश्नो मां बहु बाधते ॥

## १७. शिक्षयिष्यामि चाऽऽत्मजान्

विवाहः सर्वदुःखानां मूलमाहुरतस्त्वया ।
विवाहो नैव कर्त्तव्य एवमूचे सुतं पिता ॥
आकर्ण्य वचनं चैतत् पितृभक्तो नताऽऽननः ।
तनयः प्रत्युवाचेदं तदा गंभीरया गिरा ॥
विवाहं न करिष्यामि कदाचिदपि जीवने ।
आत्मजानपि दास्यामि शिक्षामेतां सुदुर्लभाम् ॥

## १८. नरके निवसाम्यहम्

सरोषं कलहे पत्नी पतिमेवमुवाच यत् ।
विवाहात् प्राक् तु मां तावद् बहुधैवं त्वमुक्तवान् ॥
नाऽहं स्वर्गेऽपि वत्स्यामि क्षणमात्रं त्वया विना ।
नरकेऽपि त्वया सार्धं सदैव वस्तुमुद्यतः ॥
पतिः प्रत्युवाच–
सत्यं ब्रवीषि भो देवि ! दुर्भाग्यं मम वर्त्तते ।
यदयम् अभिलाषो मे पूर्णीभूतोऽस्ति साम्प्रतम् ॥

## ९९· मन्त्रि-दीक्षान्तभाषणम्

दीक्षान्तभाषणात् पूर्वं विश्वविद्यालयस्थले,
मन्त्री स्वसचिवं क्षुब्धः साक्रोशं प्रोक्तवानिदम् ।
कथमेतावताम् अस्मिन् मुद्रिते मम भाषणे,
शब्दानां सन्निवेशो हि कठिनानां कृतस्त्वया ?
भवेद् विषयगाम्भीर्यं त्वद्दृष्टया किन्तु चाऽन्ततः,
मयाऽपि त्वत्र ज्ञेयं यत् किमहं वच्मि भाषणे ॥

## १००. तातोऽपि फलचोरकः !

फलानि चोरयन् रात्रौ वाटिकारक्षकेण वै,
सहसा बालकः कश्चिन्निगृहीतो यदाऽभवत् ।
रक्षको बालकं चाऽऽह तर्जयन् ताडयंस्तथा,
तवेदं कर्म वक्ष्यामि प्रातस्ते पितरं ध्रुवम् ।
तच्छ्रुत्वा वचनं तस्य रक्षकस्य स बालकः,
मन्दं विहस्य प्रोवाच रक्षकं तमिदं वचः ।
वृथा प्रतीक्षसे प्रातः पश्य सम्प्रति कुत्रचित्,
इहैव वाटिकायां मे जनकोऽपि विराजते ॥

## १०१. विवाहो नरकात्मकः ?

प्रस्तावं स्वविवाहस्य श्रुत्वा मातरमब्रवीत्,
सरोषं कन्यका तत्र निन्दन्ती भाविनं पतिम् ।
विश्वासो नरके नाऽस्ति यस्य नाऽस्ति तथेश्वरे,
कामये नास्तिकं नैवम् परिणेतुं कदाचन ।
तस्यास्तद् वचनं श्रुत्वा विबोधयितुमिच्छुका,
प्रत्युवाच निजां कन्यां जननी सस्मिताऽऽनना ।
तत्र चिन्ता न कर्त्तव्या-आस्तिकोऽयं भविष्यति,
विवाहाऽनन्तरं तत्र विश्वासः समुदेश्यति ॥

## १०२. पीत्वाऽवेहि किममृतम्

पात्रद्वयं च वृद्धाया दृष्ट्वा कश्चित्तु हस्तयोः,
उवाच यत् किमत्राऽस्ति पात्रयोः कृपया वद ।
'एकस्मिन् वर्त्तते पात्रे विषम् अन्यत्र चाऽमृतम्',
इतिश्रुत्वा स पप्रच्छ विषं कस्मिन् क्व चाऽमृतम्?
तस्य तद्वाचमाकर्ण्य सा वृद्धा प्रत्युवाच यत्,
अत्रैकं पीयतां नीत्वा तेनाऽन्यज्ज्ञास्यते ध्रुवम् ॥

## १०३. निरर्था पदयात्रेयम्

विधायकपदं यैश्च प्राप्तं वा सांसदं पदम्,
यैश्च मन्त्रिपदं प्राप्तं राज्यपालपदं तथा।
प्रधानमन्त्रिणो यैर्वा प्राप्तं राष्ट्रपतेः पदम्,
ध्रुवं सुसफला तेषां पदयात्रा हि भारते।
निरर्था पदयात्रा तु श्रीविनोवामहात्मनः,
येनैकमपि न प्राप्तं पदं स्वाधीनभारते॥

## १०४. नैव कोऽप्यागमिष्यति

कश्चिदागत्य ग्रामीणो राजधान्यां च मन्त्रिणम्,
मिलित्वा कार्यसिद्ध्यर्थं किमप्येष न्यवेदयत्।
'पुनः कदाचिदायाहि नाऽवकाशोऽस्ति सम्प्रति',
मन्त्रिमहोदये त्वेवम्प्रोक्ते स प्रत्युवाच यत्।
अवकाशं यदा साहब् भवान् प्राप्स्यति, मादृशः,
कार्यार्थी न भवत्पार्श्वे तदा कोऽप्यागमिष्यति॥

## १०५. वर्जिता न विवस्त्रता

देहादुत्तार्य वस्त्राणि निर्वस्त्रा युवती यदा,
स्नातुकामा तडागे च प्रवेशं कर्त्तुमुद्यता ।
कश्चिन्निवेदयत्येवमागत्य रक्षकस्तदा,
तडागेऽस्मिन् मनुष्याणामवगाहोऽस्ति वर्जितः ।
यद्येवं वर्त्तते तर्हि कथं न भणितं त्वया,
यदाऽहं निजवस्त्राणि निःसारयितुमुद्यता ।
इत्युक्तायां युवत्यां स रक्षको वाक्यमब्रवीत्,
वस्त्राणि धारयन्तीं तां युवतीं सम्भ्रमाऽन्विताम् ।
स्नानमेव तडागेऽस्मिन् मनुष्याणां विवर्जितम्,
अत्र स्थित्वा तु वस्त्राणाम् अवतारो न वर्जितः ।।

## १०६. परिपूर्णाङ्गिनी मम

अतीव स्थूलया सार्धं स्त्रिया गच्छन्तमेकदा,
विलोक्य देवदत्तं तु सखा कश्चन विस्मितः ।
शनैः पप्रच्छ कर्णाऽन्ते महिलामिङ्गयंस्तदा ?
सखे मां ब्रूहि तावत् किम् इयमर्धाङ्गिनी तव?
श्रुत्वा मित्रवचांस्येवं देवदत्त उवाच यत्,
नेयम् अर्धाङ्गिनी क्वाऽपि परिपूर्णाङ्गिनी मम।।

## १०७. सिंहेनैवास्ति कर्त्तव्यम्

शिष्यः —

यदि त्वां जंगले कश्चित् सिंहोऽकस्मान्मिलेत्तदा,
करिष्यसि ततस्त्वं किं कृपया ब्रूहि हे गुरो !

गुरुः –

तत्राऽहं किं करिष्यामि कर्त्तव्यं नाऽस्ति तत्र मे,
यत्किमप्यस्ति कर्त्तव्यं तत् सिंहेनैव वर्त्तते ॥

## १०८. आकाशकुसुमं वचः

अन्ते मुख्याः समाचाराः पुनश्च श्रूयतामिति,
उद्घोष्याऽऽकाशवाण्यां च समाचाराः प्रसारिताः ।

तत्र प्रथमः समाचारः--

महदुत्पादनं जातं विहारे कोयलाखनौ,

द्वितीयः समाचारः–

ट्रेनानि कोयलाऽभावात् निरस्तान्येकसप्ततिः ।

तृतीयः समाचारः–

दस्युभ्यश्च सुरक्षाया व्यवस्था प्रकृता दृढा,

चतुर्थः समाचारः–

हता षोडश ग्रामीणाः प्रदेशे चाऽद्य दस्युभिः ।

## १०९. नेतृता दस्युता समा ?

अन्तःप्रेरणया कश्चिद् दस्युस्त्यक्त्वा च दस्युताम्,
आत्म-समर्पणं कृत्वा कारागारं प्रविष्टवान् ।

निजैराचरणैर्भद्रैः कारागारेऽप्यसौ नरः,
व्यतीत्य पञ्च वर्षाणि शीघ्रं मुक्तः कथंचन ।

राजनीतिक-पार्टीनां कारागारमुखे तदा,
कार्यकर्त्तार आगत्य सस्नेहं तं न्यवेदयन् ।

अस्मदीये दले भूत्वा प्रविष्टः कृपया भवान्,
नेतृत्वं कुरुतां तावद् एतद्धि कामयामहे ।

तच्छ्रुत्वा वचनं तेषां स नरः प्रत्युवाच यत्,
मुञ्चत मां यतो नाऽहं पुनरिच्छामि दस्युताम् ।।

## ११०. राजभेदः प्रकाशितः

अस्मद्देशस्य राजाऽयं दुष्टो मूर्खश्च वर्त्तते,
एवं कश्चिद्यदाऽवोचत् निगृह्य सोऽभियोजितः ।

समुपस्थापितश्चैव यदा न्यायालये तदा,
वाक्कीलः प्रोक्तवांस्तत्र न्यायाधीशमिदं वचः ।

अपराधी महानेष पुरुषो वर्त्तते यतः,
गुप्तं भेदं स्वदेशस्य समुद्घाटितवान् अयम् ।।

## १११. श्रूयतां कलि-माहात्म्यम्

विचित्रं विविधं दृष्टं मया यच्च कलौ युगे,
तदहं वर्णयाम्यत्र संक्षेपेणैव श्रूयताम् ।
क्रीडतो बालकान् दृष्ट्वा पृष्टं केषामिमे सुताः,
उत्तरं प्राप्तवान्-एते तनया ब्रह्मचारिणाम् ।
दृष्ट्वा शुष्यन्ति वस्त्राणि पृष्टं केषामिमानि वै,
दिगम्बराणां वस्त्राणि शुष्यन्तीत्यूत्तरं श्रुतम् ।
दृष्ट्वा मोटरयानानि पृष्टं केषाम् इमानि वै?
उत्तरे च मया ज्ञातं यानानि पदयात्रिणाम् ।
रम्याम् अट्टालिकां दृष्ट्वा कस्येयम्? पृष्टवान् यदा,
सर्वस्वत्यागिनः साधोरियम् अस्तीति ज्ञातवान् ।
कार्यशालां भुशुण्डीनां दृष्ट्वा कस्येति पृष्टवान्,
उत्तरे च मया ज्ञातम्-योगिनां शान्तचेतसाम् ॥

## ११२. प्रेता अपि पलायिताः

कलहे प्रकीर्त्तिते पत्नी पतिम् एवमुवाच यत्,
प्रेतवासो गृहं तत्स्यात् यत्र न गृहिणी भवेत् ।

पतिः—

सत्यम् उक्तं त्वया देवि! विलोक्य गृहिणींयतः,
प्रेता अपि समुद्विग्नाःपलायन्ते गृहाद् ध्रुवम् ॥

## ११३. यत एकं ततो युग्मम्

चिकित्साऽध्यापकः कश्चित् पाठयन् विषयं निजम्,
कक्षायामेकदा छात्रान् सहसा पृष्टवान् इदम् ।
कस्याश्चित्तु स्त्रियाः युग्मम् अपत्यं जायते कथम्,
किमत्र कारणं ब्रूत भोश्छात्रा ! युग्मसन्ततौ ?

एकः छात्रः—

यस्माद्धि कारणादेकम् अपत्यं जायते स्त्रियाः,
अपत्यं जायते युग्मं तस्मादेव हि कारणात् ॥

## ११४. कोऽपराधोऽत्रवर्त्तते ?

पक्षिगृहस्य[१] सहसा नक्र-ग्राह-समन्विते,
तडागे निजभार्यां तु अभियुक्तो न्यपातयत् ।
अभियोगमिमं श्रुत्वा न्यायाधीशः सुधीस्तदा,
आश्चर्यचकितस्त्वेवम् अभियुक्तम् उवाच यत् ।
किं न जानासि भो मूर्ख! इह पक्षिगृहे क्वचित्,
आहारदानं जीवेभ्यः-अपराधः प्रकीर्तितः ॥

१-चिड़ियाघर

## ११५. निराशावादिनः कृतिः !

इहाऽऽशावादिनां चैव निराशावादिनां तथा,
परिभाषाम्प्रकुर्वाणः प्राह कश्चिद् उदाहरन् ।
आविष्कारः कृतो येन वायुयानस्य धीमता,
आशावादी बभूवाऽसौ पुरुषस्त्विह सर्वथा ।
निराशावादमापन्नः किन्त्वसौ पुरुषः स्मृतः,
पैराशूटस्यच्छत्रस्य येनाऽऽविष्करणं कृतम् ॥

## ११६. ईश्वरं नैव विस्मर

आविष्कृतानां वस्तूनां प्रसिद्धे संग्रहालये,
नानावर्णान् बहून् मत्स्यान् दृष्ट्वा पात्रे चरिङ्गतः ।
पप्रच्छ दर्शकस्तत्र मत्स्य-स्थापन–कारणम्,
संग्रहाऽधीक्षकन्त्वेवं तदा कारणम् उक्तवान् ।
एतत् स्मारयितुं ह्यत्र मत्स्यपात्रं सुरक्षितम्,
कानिचिद् ईश्वरेणाऽपि वस्तून्याविष्कृतानि वै ॥

## ११७. विमुक्तः पुरुषोऽभवत्

दस्युकर्माऽभियुक्तं तं न्यायाधीश उवाच यत्,
किं तवाऽत्राऽस्ति वक्तव्यं निःशङ्को ब्रूहि सर्वथा।
आकर्ण्य तस्य तद्वाचम् अभियुक्तो जगाद यत्,
सप्ताऽन्येऽपि नरा आसन् दस्युकार्ये मया सह ।
स्थानीयानां तु नेतृणां प्रभावेण महोदय!
चत्वारस्तत्र ते मुक्ता इति सत्यं ब्रवीमि ते ।
पुलिसाऽधीक्षकेनाऽथ तत्कालं स्वयमेव हि,
प्रदानाऽऽदानपद्धत्या त्रयो मुक्तास्तथाऽपरे ।
दरिद्रश्चाऽहमेवैको निगृहीतोऽस्मि सम्प्रति,
निगृह्य चाऽथ भवतां पुरस्तात् प्रापितोऽभवम् ।
एतावानपि किंनाऽस्ति प्रभावो भवतामिह,
यन्मामेकाकिनं तावन्मोक्तुमर्हति साम्प्रतम् ?
तस्य तद्वचनं श्रुत्वा न्यायाधीशः स्मरन् तदा,
स्वीयं प्रभाववैशिष्ट्यं पुरुषं तं विमुक्तवान् ॥

## ११८. कः सुरक्षति तावन्माम्

ईश्वरः सर्वतो रक्षां मम चेह करिष्यति,
कथनेऽस्मिन् सदैवाऽस्ति विश्वासःसुमहान् मम ।
किन्त्वहं ज्ञातुमिच्छामि यावद् रक्षति न त्वसौ,
तावन्मम सुरक्षां तु प्रकरिष्यति कः पुनः ?

## ११९. वैद्योऽयं नाऽनृतं वदेत्

मूर्च्छितं रोगिणं दृष्ट्वा तस्य स्पृष्ट्वा च मस्तकम्,
उक्तवान् सहसा वैद्यः — 'वराकोऽयं दिवंगतः'।
'नाऽहं मृतोऽस्मि, जीवामि, इति प्रोक्ते तु रोगिणि,
भर्त्सयन्ती तदा तस्य भार्या पतिमुवाच यत्।
अनिवार्यं सदा तावद् ब्रवीषि व्यर्थमेव त्वम्,
वैद्योऽयं बहुविख्यातः किम् असत्यं वदिष्यति ॥

## १२०. किं विवस्त्रस्य ते यात्रा ?

पप्रच्छ यात्रिणं कश्चिद् विमानोड्डयनस्थले,
भारं तस्याधिकारी तु यात्रापूर्वं यथाविधि ।
'सवस्त्रम् अथवा ब्रूहि निर्वस्त्रं ज्ञातुमिच्छसि,
मम भारम्' इति प्रोक्ते यात्रिणि सैवम् उक्तवान् ।
यदवस्थो विमानेऽस्मिन् यात्रां कर्तुं त्वमिच्छसि,
तदवस्थस्य भारं वै ज्ञातुमिच्छाम्यहं तव ॥

## १२१. राजनीतिः गृहेऽप्येषा

श्वश्रू –

सत्तारूढा यथा किञ्चिन्न सहन्ते तथैव त्वम्,
न हि मां सहसे देवि! प्रस्थानं मे च काङ्क्षसि ।

वधू.

यथा विरोधिपक्षोऽयं दोषं पश्यति सर्वदा,
तथा तेऽवगुणे दृष्टिर्न कदाऽपि प्रशंससि ।।

## १२२. बालकल्याणवत्सरः

संवत्सरोऽयं बालानां कल्याणाय प्रकीर्तितः,
आकर्ण्य घोषणामेनां खल्वाटः कश्चिदुक्तवान् ।
येषां बाला न वर्त्तन्ते खल्वाटा ये च मादृशाः,
तेषां कृते बालवर्षं व्यर्थमेतद् भविष्यति ।

अन्यत्र च–

बालोत्थानाय वर्षेऽस्मिन् तैर्यत्नो बहुशः कृतः,
केशवर्धकतैलेनाऽवर्धयन्त शिरोरुहान् ।।

## १२३. सम्पादकस्य खिन्नत्वम्

कश्चित् सम्पादकोऽत्यन्तं गृहकलहेन पीडितः,
प्रेषयामास वै भार्यां तस्या मातृगृहं तदा।
श्वशुरं चैव सम्बोध्य पत्रं प्रेषितवान् इदम्,
दुःखम्, एषा हि सामग्री नाऽर्हत्यत्रोपयोगिताम्।
उपयोगो भवान् अस्याः कर्त्तुमन्यत्र शक्नुते,
सम्प्रत्यावर्तिता चैषा सखेदम् अत एव हि ।।

## १२४. पतिरन्वेति सुन्दरीम्

समारोहे तु कस्मिंश्चिद् एका नारी ससम्भ्रमम्,
समीपस्थं च पुरुषम् पप्रच्छ सहसा त्विदम्।
प्रस्तौति रुचिरम् पेयम् अतिथिभ्यस्तु साम्प्रतम्,
क्व गता सुन्दरी बाला सा दीप्ता शोभनाऽऽकृतिः?
'पेयं प्रस्तौम्यहं तुभ्यम्' इत्युक्ते पुंसि साऽब्रवीत्,
पेयं वाञ्छामि नैवाऽन्यत्-पतिम् अन्वेषयाम्यहम् ।।

## १२५. आपणे मम कोऽधुना ?

कश्चिदापणिको वृद्धो मृत्युशय्यां यदा गतः,
परिवारजनास्तत्र चाऽऽगत्य परितः स्थिताः ।
व्याकुलश्चाऽथ वृद्धः स उवाच यन्ममाऽन्तिके,
पत्नीमे वर्तते नोवा? 'अस्मि' भार्या जगाद तम् ।
'मम ज्येष्ठश्च पुत्रः क्व'? एवम्पृष्टे च पुत्रकः,
वर्तेऽहमपि चाऽत्रैव तातमित्येवम् उक्तवान् ।
अथाऽन्ये पञ्चपुत्रा मे क्वेति पृष्टे स ज्ञापितः,
ते चाऽप्यत्रैव वर्त्तन्ते निश्चिन्तो वर्त्ततां भवान् ।
अथ मे पञ्च पुत्र्यस्ताः क्व वर्त्तन्ते च सम्प्रति,
इत्येवं मरणासन्ने वृद्धे पृष्टे च वै तदा ।
उवाच तस्य पत्नी यद् विश्रामं कुरुतां भवान्,
सर्वे तेऽत्रैव वर्त्तन्ते कृपया सुखमास्यताम् ।
भार्याया वाचमाकर्ण्य रुष्टो वृद्धः स चिन्तितः,
उक्तवान्-आपणे तत्र कस्तिष्ठति ममाऽधुना? ॥

## १२६. जीवनं कठिनं कियत् ?

धर्मोपदेशकाः प्रायः धनिकानां विलासिनाम्,
स्वर्गप्रापणमत्यन्तं कठिनं कीर्त्तयन्ति वै ।
किन्तु ते निर्धनानां हि नराणां जगतीतले,
कीर्त्तयन्ति कदाचिन्नो जीवितं कठिनं कियत् ।

## १२७. लज्जामनुभवाम्यहम्

कश्चिच्चौरो भ्रमवशात् पुलिसालय एव हि,
भित्तिं भित्त्वा प्रविष्टश्च चौरकर्म प्रवृत्तये ।
दृष्ट्वा तं कश्चिद् आरक्षी कोऽयमित्युक्तवान् यदा,
किंकर्त्तव्यविमूढोऽयं चौरस्तम् प्रत्युवाच यत्,
सच्चौरोऽहम् इहाऽऽयातः कर्त्तुमात्मसमर्पणम् ।
श्रुत्वा चौरवचांस्येवम् आरक्षी पृष्टवांस्तदा,
गृहभेदनद्वारा त्वं कथमत्राऽऽगतः परम् ?
प्रश्नमाकर्ण्य चौरोऽयम् प्रत्युवाच तु निर्भयः,
मुख्यद्वारेण चाऽऽयाते लज्जामनुभवाम्यहम् ॥

## १२८. स सन्तुष्टोऽधिको मतः

देवदत्तः–

दशपुत्रो नरो यो वा यो दशलक्षरूप्यवान्,
सन्तुष्ट उभयोर्मध्ये कोऽधिकः परिकीर्त्तितः ।

यज्ञदत्तः–

दशाऽपत्यानि यो धत्ते स सन्तुष्टोऽधिको मतः,
यतो वाञ्छति नैवाऽन्यत् सन्तानमेकमप्ययम् ।
दश लक्षाणि रूप्याणि यो धत्ते मनुजस्त्वसौ,
लक्षरूप्याणि चाऽन्यानि ह्यसन्तुष्टः समीहते ॥

## १२९. गृहाण रूप्यकद्वयम्

कश्चिद् वै शतरूप्याणाम् अधमर्णः क्वचिद्पथि,
मित्रैः परिवृतस्तावद् उत्तमर्णं व्यलोकयत् ।
उत्तमर्णोऽपि दृष्ट्वैनं यावत् किमपि पृच्छति,
किंकर्त्तव्यविमूढोऽयम् अधमर्णस्तम् उक्तवान् ।
षष्ठिरूप्याणि दास्यामि श्वस्तने दिवसे त्वहम्,
अष्टात्रिंशच्च दास्यामि परश्वोऽहं सुनिश्चितम् ।
अवशिष्टे च द्वे रूप्ये तदर्थं चैव केवलम्,
सज्जनं भद्रवेषं माम् आपणे मित्रसंवृतम् ।
न मार्गे याचनं युक्तं गृहाण रूप्यकद्वयम्,
इत्युक्त्वा रूप्यके तस्मै प्रदाय चैष प्रस्थितः ॥

## १३०. ते निशाचरवंशजाः

उलूकानां सभा जाता काकस्तत्र सभापतिः,
द्वारपालश्च गृध्रोऽयं दृष्टो दीपावलौ मया ।
दरिद्रेभ्यो धनं हृत्वा ये लक्ष्मीपतयोऽभवन्,
किं न ते वाहनं लक्ष्म्या भविष्यन्ति युगे-युगे ?
स्वं गृहं दीप्तिमत् कर्त्तुं ये त्वन्येषां गृहे सदा,
अन्धकारं प्रकुर्वन्ति ते लङ्कापतिवंशजाः ॥

## १३१. अभिनवा रसोत्पत्तिः

अथ भूमिका -

ज्ञात्वा सम्यग् रसोत्पत्तिं रससिद्धाः कवीश्वराः,
रसातलं न प्राप्स्यन्ति सरहस्यं तदुच्यते ।
रसा इमे रमन्ते वै प्रायशः स्त्रीजनेष्विह,
प्राज्ञैस्तस्माद् इयं नारी रमणीति निगद्यते ।
रसानां विविधानां च नारीष्वेवोद्भवो मतः,
तदहं कीर्त्तयाम्यत्र नाऽत्र नारी निरादरः ॥

शृंगाररसः --

कृत्वा षोडशधा देहे शृंगारं याति षोडशी,
यदा चित्रालये क्वाऽपि विश्वविद्यालयेऽथवा ।
तद् विलोक्य तथा यूनां मानसं चलितं यदा,
तस्मिन् काले रसोत्पत्तिः शृङ्गारस्य प्रवर्त्तते ॥

वीररसः –

रात्रौ गेहे पतिर्नित्यं यदाऽऽयाति विलम्बितः,
तद्दृष्ट्वा रमणी काचिद् रोषफूत्कारसंयुता ।
कर्मभिश्च वचोभिश्च यदा धर्षयते पतिम्,
प्रादुर्भावो रसस्य स्यात् तदा वीरस्य निश्चितम् ॥

रौद्ररसः --

कयाऽपि कन्यया सार्धम् अकस्माद् रमणी यदा,
पतिम्पश्यति हट्टेषु पथि चित्रालयेऽथवा ।
तदा तस्या रमण्यास्तु यो व्यापारः प्रवर्त्तते,
तमेव पण्डिताः केचिद् रसं रौद्रं प्रचक्षते ॥

करुणरसः --

षट्त्रिंशद्वर्षदेशीया काऽपि नारी यदा क्वचित्,
इङ्गितैश्चेष्टितैस्तत्र स्वकीयैर्युवमध्यगा ।
आत्मानं षोडशीमेव प्रदर्शयितुम् ईहते,
करुणस्य रसस्य स्यादुत्पत्तिर्हृदये तदा ॥

बीभत्सरस :--

पतिभक्तिम् असत्कृत्य लोकलज्जाभयं तथा,
इयं पतिव्रता नारी निजाय प्रेमिणे यदा ।
समर्पयति सस्नेहं शरीरं सुविभूषितम्,
बीभत्सोऽयं रसस्तत्र हृदि कस्य न जायते? ॥

भयानकरसः --

कटिप्रदेशे रोषेण कृत्वा वस्त्राऽञ्चलं मुहुः,
अनर्गलं निजां श्वश्रूं भाषमाणा च भामिनी ।
गृहक्षेत्रे कुरुक्षेत्रे युद्धायाऽऽह्वयते यदा,
भयानकस्य स्यात्तत्र समुत्पत्ती रसस्य वै ॥

हास्यरसः --

असन्तुष्टा च केनाऽपि कारणेन यदा पतिम्,
'मातृगेहं गमिष्यामि सम्प्रत्यद्यैव निश्चितम्' ।
इत्येवं वक्ति बहुधा न च गच्छति भामिनी,
तदा हास्यरसस्तत्र स्वयमेव हि जायते ॥

वात्सल्यरसः --

स्वहस्तनिर्मितं स्वादु भोजनं बहुव्यञ्जनम्,
स्टीलपात्रे समाहृत्य स्नेहाऽऽग्रहपुरःसरम् ।
भोजनाय पतिं चैषा बाधते बहुशो यदा,
वात्सल्यरस एवाऽयं स्वयमाविरभूत् तदा ॥

शान्तरसः --

पतिगृहेण सम्बद्धा ज्ञातिसम्बन्धिनस्तथा,
किञ्चित्कालमुषित्वा च निःसरन्ति यदा गृहात् ।
तद् विलोक्य तु नारीणां मुखे यज्ज्योतिरिङ्गते,
तत्र शान्तरसस्याऽऽभा सम्यग् आलक्ष्यते बुधैः ॥

अद्भुतरसः --

मम पार्श्वे धनं नाऽस्तीत्युक्त्वा चगृहिणी यदा,
गृहस्यावश्यककार्येषु वित्तमेषा ददाति नो ।
अन्येद्युरानयत्येव सुन्दरीं नवशाटिकाम्,
तद् दृष्ट्वा हृदयेऽस्माकम् अद्भुतो जायते रसः ॥

## १३२. अध्ययने तथा मग्नः

कश्चित् प्रसादयन् तातं पुत्र एवमुवाच यत्,
अद्य द्विवादनं यावत् निशायाम्पठितं मया ।
पुत्र-विकत्थनं श्रुत्वा विस्मितस्तात उक्तवान्,
द्वादशवादनादेव विद्युत् नाऽऽसीद् गृहे परम् ।
पितुर्वचनमाकर्ण्य धीमान् पुत्र उवाच यत्,
पठनेऽहं तथा मग्नो नाऽत्र ध्यानं प्रदत्तवान् ।।

## १३३. प्रविशन्ति कथं खगाः ?

कस्यचित् पक्षिणश्चैकम् अण्डं दृष्ट्वा परस्परम्
एवं संलपतस्तत्र नरौ दार्शनिकौ क्वचित् ।

एकः–

कथम् अण्डं समुद्भिद्य बहिरायान्ति शावकाः,
पक्षिणाम् इति वृत्तं मे महदाश्चर्यकारकम् ।

द्वितीयः–

नेदम् आश्चर्यकृद् वृत्तम् आश्चर्यं तु भवेदिदम्,
कथम् अण्डेष्वभिन्नेषु प्रविशन्ति खगार्भकाः ? ।।

## १३४. एकोनविंशः अध्यायः

धृतराष्ट्र उवाच—

गृहयुद्धे कुरुक्षेत्रे स्वार्थयुक्ता युयुत्सवः,
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ! ।

सञ्जय उवाच--

सेनयोरुभयोर्मध्ये स्थित्वा पार्थस्तु व्याकुलः,
दृष्ट्वा भ्रातृगणं तत्र पूज्यान् गुरुजनांस्तथा ।
स्मृत्वा बहुविधांस्तेषाम् उपकारान् मुहुर्मुहुः,
उद्विग्नमानसः कृष्णम् एवं वचनमब्रवीत् ।

अर्जुन उवाच--

अयं हि धृतराष्ट्रस्य सुपुत्रो द्वादशः स्मृतः,
येन सार्धं कृता यात्रा बहुधा टिकटं विना ।
कथमेनं हनिष्यामि समक्षं यश्च दृश्यते,
धृतराष्ट्रस्य द्वात्रिंशः पुत्रोऽयं मे महाप्रियः ।
यदाऽभूत् शर्कराऽभावः सीमेण्टं दुर्लभं तथा,
तस्मिन् कष्टमये काले यो मां परमिटं ददौ ।
आचार्योऽयं गुरुर्द्रोणो विश्वविद्यालये च माम्,
पूर्वमेव परीक्षायाः प्रश्नाः संकेतिताः सदा ।
कथमेतेन योत्स्येऽहं ब्रूहि मां पुरुषोत्तम! ,
यत्कृपया परीक्षायां सर्वदा प्रथमोऽभवम् ।

संजय उवाच--

एवम् उक्त्वा च गाण्डीवं दूरं कृत्वा धनंजयः,
सेनयोरुभयोर्मध्ये संग्रामाद् विरतोऽभवत् ।

श्रीभगवान् उवाच--

उपकारोऽपकारो वा राजनीतौ न गण्यते,
कृतज्ञभावं मन्यन्ते मूढचित्ता नराधमाः ।
येन सार्धं त्वयाऽकारि यात्रा च टिकटं विना,
तस्य श्यालोऽभवन्मन्त्री रेलमन्त्रालये तदा ।
निग्रहभयमुक्तोऽयम् अतएव हि त्वादृशान्,
अनेकान् पुरुषांस्तावद् रेलयात्रामकारयत् ।
सीमेण्ट - शर्करापत्रं भृशं येन च दापितम्,
खाद्याऽऽपूर्तिविभागेऽभूत्तस्य कश्चित् सखा तदा ।
तत्प्रभावेण तुभ्यं स प्रादात् परमिटं शृणु,
बहुभ्यश्च तथाऽन्येभ्यः पुरुषेभ्योऽपि दत्तवान् ।
एवं त्रिधा महाक्षुद्रा उपकाराः पुरातनाः,
न स्मर्त्तव्या न मन्तव्यास्त्वादृशैः पुरुषैः क्वचित् ।
अथ या गुरुदेवस्य त्वया चर्चा कृताऽधुना,
सुमहत् कारणं तत्र सावधानम् अवेहि तत् ।
शिक्षकस्य पदे पूर्वं नियुक्तः सन् मुहुर्मुहुः,
आचार्यपदवीं रिक्तां विलोक्य सहसा गुरुः ।

विश्वविद्यालये तस्मिन् भ्रातरं ते युधिष्ठिरम्,
छात्रसंघस्य नेतारं ज्ञात्वा द्रोणस्तु नीतिमान् ।
साहाय्येन तव भ्रातुः प्राप्तुं तां पदवीं तदा,
तुभ्यम् उद्घाटिताःप्रश्ना बहूनङ्कांश्च दत्तवान् ।
स्वार्थस्य भावना सा तु मन्यसेऽत्र कृतज्ञताम् ?
अतएव हि कौन्तेय युद्धाय कुरु निश्चयम् ।

अर्जुन उवाच---

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत!
त्यक्त्वा कृतज्ञताभावं करिष्ये वचनं तव ।

संजय उवाच---

राजन् संस्मृत्य संस्मृत्य संवादं तमिहाऽद्भुतम्,
दूरदृष्टि च कृष्णस्य ममाऽपि ज्ञानम् आगतम् ।
योगेश्वरस्य कृष्णस्य मध्यमपाण्डवस्य च,
यत्र संयुक्तमोर्चा स्याद् ध्रुवं तत्र जयो भवेत् ।

अथ माहात्म्यम्--

य इमं परमं गुह्यम् अध्यायम् अनुचिन्तयेत्,
विमुच्य दुःखशोकाभ्याम् प्राप्नुयात् परमं सुखम् ।।

## १३५. वर्त्तते हानिकारकम्

व्याकरणस्य कक्षायां पृष्टवान् गुरुरेकदा,
'धनं ददामि विप्राय' कारकम् इह किं भवेत् ।
तस्य प्रश्नं समाकर्ण्य शिष्यः कश्चिदुवाच यत्,
वाक्ये प्रतीयते ह्यत्र कारकं हानिकारकम् ॥

## १३६. पृच्छ्यते वा निमन्त्र्यते ?

सेवाप्रत्याशिनं कश्चित् साक्षात्कर्त्ता तु पृष्टवान्,
किं भवान् मद्यपानं च प्रकरोत्यथवा न वा ?
तस्य तत्प्रश्नमाकर्ण्य प्रत्याशी प्रत्युवाच यत्,
पूर्वं माम् उच्यतां यत् किं प्रश्नोऽयं वा निमन्त्रणम् ॥

## १३७. वरम् अन्वेषयाम्यहम्

कस्मिंश्चित्तु समारोहे युवती सम्भ्रमान्विता,
चतुर्विंशतिवर्षीयां तत्रस्थाम्प्राह कन्यकाम् ।
पञ्चघण्टादहं तावत् पतिमन्वेषये परम्,
न जाने क्व गतः श्रीमान् मन उद्विजते मम ।
तस्य तद्वचनं श्रुत्वा कुमारी निजगाद यत्,
अहं तु पञ्चभिर्वर्षैः पतिमन्वेषयामि भोः !

## १३८. पशवो बुद्धिमत्तराः

मनुष्येभ्योऽधिकाः सन्ति पशवो बुद्धिमत्तराः,
इति सिद्धं प्रकुर्वाणः प्राह कश्चिदुदाहरन् ।
तुरंगा दश धावन्ति स्पर्द्धायां यदि कुत्रचित्,
तच्च द्रष्टुं सहस्राणि स्वत आयान्ति मानवाः ।
मनुष्या दश धावेयुः स्पर्द्धायां च यदि क्वचित्,
आगमिष्यति तद् द्रष्टुं नैवेकोऽपि तुरंगमः ॥

## १३९. तामेव परिणीतवान्

श्रुत्वा विवाहितं मित्रमकस्माद् देवदत्तकम्,
यज्ञदत्तः सखा तस्य चकितः समुवाच यत् ।
विवाहस्य विरोधी त्वं प्रसिद्धः सर्वदा सखे !,
ब्रूहि किं कारणं यस्माद् अभवस्त्वं विवाहितः?
वचनं यज्ञदत्तस्य श्रुत्वा तस्य सुहृत् तदा,
मन्दं मन्दमुवाचैवं देवदत्तः स्मिताऽऽननः ।
विरोधिनी विवाहस्य कन्या मामेकदाऽमिलत्,
दृष्ट्वा विचारसाम्यं तत् परिणीतस्तया सह ॥

## १४०. दैवज्ञास्तत्र मौनिनः

ज्योतिषा निजपञ्चाङ्गे व्यर्थमेव लिखन्ति यत्,
प्रभावो ग्रहणादीनां जीवने वर्त्तते महान् ।
न सूर्यग्रहणस्याऽभूत् प्रभावो मम जीवने,
न चन्द्रग्रहणस्याऽपि प्रभावो लक्षितो मया ।
एकस्य ग्रहणस्यैव प्रभावो यस्तु लक्षितः,
तत् पाणिग्रहणं चाऽस्ति दैवज्ञास्तत्र मौनिनः ॥

## १४१. बधान घटिकां लघ्वीम्

भित्तिस्थितं घटीयन्त्रं यदा दोषमुपागमत्,
तदा तस्य सुधारार्थं तद् घटीयन्त्रकं महत् ।
रामो नीत्वा यदा याति विशेषज्ञस्य चाऽऽपणे,
तदैव पथि कस्याश्चित् महिलायाः ससम्भ्रमात्,
वस्तूनि न्यपतन् भूमौ घटीयन्त्राऽभिघाततः ।
क्रुद्धां तां महिलां रामो यदा चाऽयाचत क्षमाम्,
तदा सा महिला तत्र रामम् उपदिदेश यत् ।
लघ्वीं कथं न बध्नासि स्वहस्ते घटिकाम् अरे!
यथाऽन्ये पुरुषा हस्ते बध्नन्ति घटिकां तथा ॥

## १४२. सम्मेल्य द्विदले शाकम्

द्विदले सैन्धवस्याऽद्य संस्कारो विस्मृतस्त्वया,
अतो मे दीयतां किञ्चित् सैन्धवं पतिरुक्तवान् ।

पत्नी —

विस्मृत्या निहितं शाके द्विवारं सैन्धवं मया,
द्विदले तत्तु सम्मेल्य भोक्तुमर्हसि साम्प्रतम् ।

## १४३. उत्तीर्णः स्यामहं कदा ?

विलोक्य हस्तरेखां तु ज्यौतिषः प्रोक्तवानिदम्,
जीवनेऽध्ययनं कामं कर्त्तासि न संशयः ।

छात्रः—

अध्येमि बहुभिर्वर्षैरिति सत्यं त्वमुक्तवान्,
अहं किन्तु समुत्तीर्णः कदा स्याम् इति मां वद ।।

## १४४. सूचना दुःखदा तदा

परीक्ष्य महिलां वैद्यो ज्ञात्वा गर्भवतीं च ताम्,
ऊचे श्रीमति! राधे! त्वं सूचनां च शुभां शृणु ।
एवं वदति वैद्ये सा राधा मध्ये जगाद यत्,
नाऽस्म्यहं श्रीमती राधा 'कुमारी राधिका' त्वहम् ।
तस्याः संशोधनं श्रुत्वा वैद्योऽप्येवमुवाच यत्,
यदि चाऽसि कुमारी त्वं सूचना दुःखदा तदा ।।

## १४५. इमे सुकृतिनोऽधुना

मद्यं च मांसमथ दुर्वचनं तथैव,
त्याज्यं त्वयेति गुरुणा बहुधोपदिष्टः ।
शिष्यो ब्रवीति न हि शक्यमिदं यतो हि,
'अङ्गीकृतं सुकृतिनः परिपालयन्ति' ॥

## १४६. उपमेयमिदं नवम्

निर्वाचनाऽन्ते त्वथ राजधान्याम्,
मन्त्रित्व - कार्ये शपथग्रहार्थम् ।
नामानि गृह्णाति विधायकानाम्,
क्रमाऽनुसारेण च राज्यपालः ।
सञ्चारिणी दीपशिखेव रात्रौ,
जहाति यन्नाम च मन्त्रिसूची ।
नरेन्द्रमार्गाट्ट इव प्रपेदे,
विवर्णभावं स विधायको वै ।

## १४७. समुद्विग्नः सुतः कस्य ?

काचिद् वधूः स्वकीयं वै सप्तवर्षीय-पुत्रकम्,
श्वश्र्वाः समीपे त्यक्त्वा च निजमातुर्गृहं गता।
दिनेष्वथ व्यतीतेषु श्वश्र्वाः पत्रं समागतम्,
वधूमुदिश्य चैवाऽसौ लिलेख पत्रके तथा।
त्वमत्र शीघ्रमायाहि प्राप्य पत्रमिदं यतः,
उद्विग्नो दुःखितश्चैव वर्त्तते तनयो भृशम्।
अथ तत्पत्रमासाद्य वधूः पत्रेण पृच्छति,
उद्विग्नो वर्त्तते कस्य पुत्रस्तव ममाऽथवा ? ॥

## १४८. शीतं मे हानिकारकम्

पाकेट-कर्त्तकः कश्चित् मित्रमेवमुवाच यत्,
कालः शीतस्य मह्यं नो कदापि रोचते यतः।
जनाः स्वपाकेटे हस्तौ दधति सर्वदा,
तस्मादेव हि पाकेट - कर्त्तने प्रभवामि न ॥

## १४९. ममाऽप्यस्ति गुरुर्भवान्

लिपिकश्चतुरः कश्चिदवकाशं तु प्रेप्सया,
कार्यालयेऽवकाशार्थम् एवमावेदनं ददौ ।
मम पत्नी महारुग्णा साम्प्रतं वर्त्तते ततः,
गन्तुमिच्छामि तां द्रष्टुमहं हि श्वशुरालयम् ।

तस्याऽऽवेदनपत्रं तत् पठित्वा लिपिकं च तम्,
प्राह कार्यालयाध्यक्षः आश्चर्यचकितस्तदा ।
संभवेत् कथमेतद् यत् पत्नी ते रोगिणी भवेत् ?
कार्यालये तु पत्न्यास्ते ह्य एव पत्रमागतम् ।
तस्मिन् पत्रेऽलिखच्चाऽसौ यत्त्वया नैव प्रेष्यते,
रूप्यकाणि तदर्थं, सा बहु कष्टायतेऽधुना ।

तस्य तद् वचनं श्रुत्वा लिपिकः स ससम्भ्रमः;
प्रत्युत्तरमदत्वा च यदा गन्तुं समुद्यतः ।
तदा कार्यालयाऽध्यक्षस्तमेवम् पुनरुक्तवान् ,
किं भोः! क्व यासि? ब्रूहि त्वं कथं नोत्तरितं त्वया?

तस्य तद्वाचमाकर्ण्य लिपिकः प्रत्युवाच यत्,
किमुत्तरमहं दद्याम् ! नाऽस्त्यत्रोत्तरयोग्यता ।
असत्यभाषणेऽत्यन्तं निपुणोऽहमिति स्मृतः,
न कोऽप्यसत्यवादी स्यान्मादृशश्चेति वै मतम् ।
परन्त्वद्य मया ज्ञातं यन्न दक्षतरोऽस्म्यहम्,
असत्यभाषणे तावन्ममाऽप्यस्ति गुरुर्भवान् ।
यदत्र परमं सत्यं वर्त्तते तद् ब्रवीमि यत्,
अस्माकम् अद्यपर्यन्तं विवाह एव नाऽभवत् ॥

## १५०. तव स्वप्ने लता कथम् ?

उद्विग्नां कर्त्तुमिच्छन् हि पत्नीं पतिरुवाच यत्,
प्रायशो मम स्वप्नेषु 'लता' आयाति साम्प्रतम्।
तस्य तद्वाचमाकर्ण्य पत्नी शान्तमुवाच यत्,
वराकी तत्र किं कुर्यात् लताऽपि हतभागिनी।
तस्याः पतिः साम्प्रतं तु मम स्वप्नेषु दृश्यते,
तस्माद् एकाकिनी साऽथ तव स्वप्नेषु गच्छति॥

## १५१. नरकं गन्तुमिच्छामि

यमलोके नरं कञ्चिद् यमराजस्तु पृष्टवान्,
स्वर्गे वा नरके ब्रूहि कुत्र त्वं गन्तुमिच्छसि।
तस्य प्रश्नं समाकर्ण्य पुरुषः प्रत्युवाच यत्,
पूर्वं तु ज्ञातुमिच्छामि मम पत्नी क्व वर्त्तते ?।
'सा तु विराजते स्वर्गे' यदैव यम उक्तवान्,
'नरकं गन्तुमिच्छामि' स नर उत्तरं ददौ॥

## १५२. प्रारभ्य चोत्तमजनाः

विद्यालये भवति शान्तियुता परीक्षा,
प्रारब्धवान् अनुचितं त्वथ कर्म चैकः ।
दृष्ट्वा च छात्रमथ कक्षनिरीक्षकस्तम्,
ऊचे यदा किमपि सम्प्रति रोद्धुकामः ।
छात्रो जगाद सहसा कुरु नैव विघ्नम्,
त्यक्ष्यामि नाऽनुकरणं च गुरो ! यतो हि ।
"विघ्नैः पुनः पुनरपि प्रति हन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति" ॥

## १५३. ग्रामीणः पृष्टवांस्तदा

सम्भाषणं प्रकुर्वाणो यात्रायां ट्रेनयानके,
नेता कश्चिदुवाचैवं समीपस्थांश्च यात्रिणः ।
शीघ्रं प्रगतिरस्माकं भविता निश्चितं यतः,
समाजवाद आयाति पूंजीवादश्च गच्छति ।
तस्य तद्वचनं श्रुत्वा ग्रामीणः कश्चिदुक्तवान्,
आयास्यति कदा बाबू! फैजाबादश्च ब्रूहि माम् ॥

## १५४. वसुधैव कुटुम्बकम्

चौरकर्माऽभियोगस्तु यदा सिद्धोऽभवत्तदा,
न्यायाधीशोऽभियुक्ताय कारादण्डं प्रदत्तवान् ।
कारादण्डं समाकर्ण्य अभियुक्तः स निर्भयः,
न्यायाधीशमुवाचैवं वचनं शास्त्रसम्मतम् ।
परेषां नैव वस्तूनि गृहीतानि मया प्रभो !
भवादृशं च मे चित्तं नाऽस्ति संकुचितं यतः ।
'अयं निजः परो वेति गणना लघुचेतसाम्,
उदारचरितानां तु वसुधैव कुटुम्बकम् '॥

## १५५. भवती स्नातुमर्हति ?

वार्त्तालापस्य मध्ये तु युवती काचिदाह यत्,
शुद्धचित्तवतां पुंसां सर्वमेवाऽस्त्यनावृतम् ।
यदन्येषां समक्षं च न कर्त्तुं शक्यते मया,
तथाविधं न मे गुह्यं स्यात् किञ्चिदपि जीवने ।
तस्यैतां वाचमाकर्ण्य युवा कश्चिदुवाच यत्,
सर्वेषां किं समक्षं वै भवती स्नातुमर्हति ? ॥

## १५६. बली मुद्रणराक्षसः

कीदृशा मुद्रणे दोषा भवन्ति मुद्रणालये,
ते समाचारपत्रेषु दृश्यन्ते प्रायशो मया ।

'भिक्षामन्त्री'ति दृष्ट्वाऽहम् एकदा चकितोऽभवम्,
नवो मन्त्रालयः कोऽयम् भिक्षुकल्याणहेतवे ?

तत्रस्थं मुद्रितं वृत्तं पठित्वा च शनैः शनैः,
प्रसंगतश्च ज्ञातं यत् 'शिक्षामन्त्री' ति वर्त्तते ।

'नवीनो राजभूतोऽपि भूतावासे समागतः',
पठित्वा शीर्षकं चैतत् महदाश्चर्यमाप्तवान् ।
पूर्णं वृत्तं यदा दृष्टं ज्ञातमभूत् तदैव यत्,
नवीनो राजदूतोऽपि दूतावासे समागतः ।

'वृत्तं कम्बलदस्यूनाम्' इति शीर्षेण चिन्तितम्,
किमिमे दस्यवो जाताः कम्बलायैव कम्बलम् ।

पठित्वा च समाचारं पश्चादवगतम् मया,
'वृत्तं चम्बलदस्यूनाम्, वर्णितं तत्र वर्त्तते ।

दृष्ट्वाऽहं चकितोऽभूवं समाचारस्य शीर्षकम्,
'शोकगीतं समाकर्ण्य मन्त्री हर्षमुपागमत्' ।

पठित्वा च समाचारं पश्चाज्ज्ञातमिदं मया,
'लोकगीतं' समाकर्ण्य मन्त्री हर्षान्वितोऽभवत् ।

सम्पादका निवेद्यन्ते पत्रिकाणां विशेषतः,
कृपया मुद्रणे पूर्णं ध्यानं ददतु ते यतः ।

'प्रशस्यमित्र' इत्यत्र मम नाम्न्यपि चैकदा,
इकारस्य परीवर्त्तः कृतो मुद्रणराक्षसैः ॥

## १५७. इदं तु महदाश्चर्यम्

आश्चर्यभाषणस्पर्द्धा केनाऽप्यायोजिता यदा,
षट् प्रतियोगिनस्तत्र निजमाश्चर्यम् ऊचिरे ।
सवेगमम्बरे धावन् रथो दृष्टः ससारथिः,
एवं हि प्रथमस्तत्र निजमाश्चर्यम् उक्तवान् ।
द्वितीयः प्रतियोगी च प्रोक्तवान् यन्मयाऽप्यहो,
दृष्टो यन्मूषकश्चैको जघान करिणं रणे ।

तृतीयः प्रतियोगी तु प्राह यद् दृष्टवानहम्,
चौपाटीसागरक्षेत्रे कलकत्तामवस्थिताम् ।
अहं कुतुबमीनारे स्थितं ताजमहालयम्,
दृष्ट्वानिति तत्राऽऽह प्रतियोगी चतुर्थकः ।
स्पर्द्धायां प्रोक्तवानेवं प्रतियोगी च पञ्चमः,
गायन्तं सुन्दरं गीतं मूकं संगतवानहम् ।

प्रतियोगी च षष्ठोऽथ प्राह यद् दृष्टवानहम्,
एकस्मिन् हि प्रदेशे चाऽलुब्धं शुद्धं विधायकम् ।
तदाश्चर्यं समाकर्ण्य साधु साध्विति वाचकाः,
निर्णायकास्तु षष्ठाय पुरस्कारं ददुस्तथा ॥

## १५८. यथार्थ-भ्रमयोर्भेदः

कृत्वा प्रवचनं साधुः प्राह श्रोतॄन् उपस्थितान्,
जिज्ञासा यदि स्यात् काऽपि यूयं तम् प्रष्टुमर्हथ।

तत्रैको भक्त उत्थाय महात्मानं तु पृष्टवान्,
यथार्थ-भ्रमयोर्मध्ये को भेदः कृपया वद।

तस्य तद्वाचमाकर्ण्य प्रश्नकर्त्तारमिङ्गयन्,
उपवेष्टुं शनैस्तत्र महात्मा निजगाद यत्।

भवद्भिरत्र चाऽऽगत्य यन्मे प्रवचनं श्रुतम्,
तद् वै यथार्थमस्तीति नेह सन्दिग्धता क्वचित्।

प्रवचनाऽनुसारं च भवद्भिराचरिष्यते,
यदि चैतदहम् मन्ये भविता स भ्रमो महान्॥

## १५९. प्राणानेव गृहाण मे

अकस्मात् चोरको रात्रौ प्रविश्य धनिनो गृहे,
तस्य पर्यङ्कसामीप्ये गत्वा सच्छुरिकाकरः।

उवाच दीयतां सर्वं धनं शीघ्रं च मेऽन्यथा,
हरिष्यामि तव प्राणान् अधुनैव न संशयः।

तस्य तद्वाचमाकर्ण्य श्रेष्ठी स प्रत्युवाच यत्,
वार्द्धक्याय धनं गुप्तं प्राणानेव गृहाण मे॥

## १६०. शृण्वन्ति प्रतिवेशिनः

विवाहस्याऽऽदिमे वर्षे पतिर्वक्ति शृणोति 'सा',
द्वितीये चाऽथ वर्षे तु 'सा' वक्ति शृणुते पतिः ।
विवाहस्य तृतीयं च वर्षं प्रारभते यदा,
'उभौ' संवदतः सोच्चैः शृण्वन्ति प्रतिवेशिनः ॥

## १६१. तत्र मे नास्ति विश्वासः

चिकित्सकगृहे कश्चित् पुरुषो भार्यया सह,
गत्वा न्यवेदयत् तत्र मम भार्यां परीक्षताम् ।
चिकित्सकस्तु तत्पत्नीम् अन्तिकस्थे प्रकोष्ठके,
नीत्वा चैकाकिनीं यावत् प्रारेभे च परीक्षितुम् ।
पत्नी पप्रच्छ हे वैद्य ! परित्यक्ता कथं त्वया,
सेविका सा बहिर्याऽस्ति तामप्यानीयतामिह ।
तस्यास्तद् वचनं श्रुत्वा क्षुब्धस्तु स चिकित्सकः,
उवाच हे स्वसः! तेऽत्र विश्वासो मयि नास्ति किम् ?
चिकित्सकवचः श्रुत्वा महिला प्रत्युवाच सा,
विश्वासस्त्वयि मे पूर्णः पतिर्मे किन्तु योऽधुना ।
बहिर्विराजते तावत् परिचारिकया सह,
तत्र मे नास्ति विश्वासस्तस्मात् तामिह चाऽऽह्वय ॥

## १६२. किं चाऽत्र भोक्ष्यते विषम् ?

धूमपानं प्रकुर्वन्तं दृष्ट्वा ग्राहकम् उक्तवान्,
सिगरेटमिदं पातुं नैवाऽत्र शक्नुते भवान् ।
सिगरेटमिदं किन्तु मया क्रीतं तवाऽऽपणात्,
एवं हि ग्राहके प्रोक्ते जगादाऽऽपणिकस्तदा ।
मन्ये क्रीतं त्वयाऽत्रैव किन्तु पातुं न शक्यते,
विक्रीयते विषं चाऽपि किं भवान् भोक्ष्यतेऽत्र तत् ॥

## १६३. श्रीमान् श्यालो महोदयः !

अभियुक्तो यदा कश्चित् कारागारं प्रविष्टवान्,
कारागारस्य चाऽध्यक्षस्तं विहस्यैवम् उक्तवान् ।
मन्ये त्वं प्रथमं वारम् आयातः श्वशुरालये,
स्वागतं भद्र! ते नित्यं यथेच्छं वस साम्प्रतम् ।
काराध्यक्षस्य तद्वाचं परिहासप्रियस्य वै,
श्रुत्वा चौरोऽपि तत्रैवं जगाद सुस्मिताऽऽननः ।
इतः पूर्वम् अहं प्राप्तो बहुशः श्वशुरालयम्,
परन्तु प्रथमं वारं दृष्टः श्यालो महोदयः ॥

## १६४. एवं श्वा न मिलिष्यति

जीवविक्रयमेलायां दृष्ट्वा तं श्वानशावकम्,
आपणिकम् उवाचैका महिला क्रेतुमुत्सुका ।
सुन्दरोऽतिप्रियश्चाऽयं वर्त्तते श्वानशावकः,
किन्तु मे पतये चैतत् सर्वं नैव तु रोचते ।
तस्य तद्वाचमाकर्ण्य जगादाऽऽपणिकस्तदा,
अवश्यं किन्तु क्रेतव्यो भवत्या शावको यतः ।
पतयस्तु मिलिष्यन्ति बहवः किन्तु शावकः,
एतादृशस्तु श्वानस्य न कदापि मिलिष्यन्ति ॥

## १६५. पत्न्याः सर्पभयं वरम्

एकसप्ताहपर्यन्तं कश्चन विषधरैः सह,
उषित्वा कीर्त्तिमानं तत् नवं संस्थाप्य मानवः ।
यदा च बहिरायातः सर्पकक्षात् स निर्भयः,
किञ्चिद् विचार्य चाऽकस्माद् विषण्णवदनोऽभवत् ।
तस्य तद्भावमालक्ष्य कश्चिद् पप्रच्छ तं यदा,
कारणं तद्विषादस्य नर एवं जगाद सः ।
विचारो मम मस्तिष्के ह्यधुनैवाऽयमागतः,
भार्यया सह वासः स्याद् अद्य रात्रौ गृहे मम ॥

## १६६. प्रयोगं करवाणि किम् ?

चौरकर्माभियोगस्य निर्णयं श्रावयन् स्वयम्,
न्यायाधीशोऽभियुक्तं तु प्रोवाच हर्षयन्निव ।
प्रमाणं सबलं किञ्चित् प्राप्तं नैवाऽत्र वर्त्तते,
स्कूटरयानचौर्येऽस्मिन् तस्मान्मुक्तोऽसि साम्प्रतम् ।
श्रुत्वा तद्वचनं हृष्टः सोऽभियुक्तो जगाद यत्,
किं तद्धि स्कूटरं श्रीमन् प्रयोक्तुं शक्यतेऽधुना ।।

## १६७. बीमा तस्य तु कारिता

सागरस्य तटे बालो मातरम् एवम् उक्तवान्,
स्नातुमिच्छामि हे मातः प्रविश्य सागरे त्वहम् ।
पुत्रस्य वचनं श्रुत्वा माता तं प्रत्युवाच यत्,
न हि भो! न त्वया गम्यः अगाधःसागरोऽस्त्यम् ।
मातुर्वचनामाकर्ण्य पुनः पुत्रस्तु पृष्टवान्,
किन्तु मातः समुद्रेऽस्मिन् तातः स्नातुं कथं गतः ।
तस्य तद् वचनं श्रुत्वा माता पुत्रमुवाच यत्,
'स गतो यदि किं तर्हि? तस्य बीमा तु कारिता ।।

## १६८. शून्यं तुभ्यं प्रदीयते

वार्षिक्यां तु परीक्षायां दृष्ट्वा प्रश्नान् अनीप्सितान्,
उत्तरपुस्तिकायां च छात्रः कश्चित् लिलेख यत् ।
एतेषामिह प्रश्नानाम् उत्तरं नैव ज्ञायते,
भगवान् एव जानाति प्रश्नानाम् उत्तराणि वै ।
परीक्षकश्च तं लेखं दृष्ट्वा चोत्तरपुस्तके,
छात्राय निर्दिशन् तत्र लिलेख वचनं त्विदम् ।
शतम् अंकाः प्रदीयन्ते श्रीमद्भगवते परम्,
तुभ्यमत्र सहर्षं च शून्यमेव प्रदीयते ॥

## १६९. किमेतदपि न ज्ञातम् ?

दारिद्र्यपीडितः कश्चिद् वैयाकरण आपणे,
लवणं च गुडं चैव विक्रेतुम् उद्यतोऽभवत् ।
ग्राहकः कश्चिदागत्य तमेवं पृष्टवान् यदा,
गुडस्याऽस्ति च को भावः? भावश्च लवणस्य कः?
ग्राहकप्रश्नमाकर्ण्य वैयाकरण उक्तवान्,
'गुडत्वम्' अथ 'लावण्यम्' किं न जानासि मूढधीः॥

## १७०. निजकन्या सुरक्ष्यताम्

यौतकस्याऽधिकां याच्ञाम् आकर्ण्य कन्यकापिता,
दुःखितः समुवाचेदं वरस्य पितरं वचः ।
"कियान् कष्टकरः कालः समायातोऽस्त्ययं हि यत्,
विवाहे यौतकं देयं कन्यापि दीयतां तथा ।"
तस्य तद्ववचनं श्रुत्वा वरस्य जनकस्तदा,
उक्तवान् कन्यकाताातं मन्दस्मितिपुरःसरम् ।
'अस्तु तर्हि विवाहे च केवलं यौतकं त्वया,
दातव्यम्, अथ कन्या च निजपार्श्वे सुरक्ष्यताम् ॥

## १७१. चलचित्रालये गतौ

कश्चन बालकस्तावद् दशवर्षीय उक्तवान्,
कृपया दीयतां श्रीमन् पञ्च रूप्याणि मे यतः ।
अहं तु गन्तुमिच्छामि पित्रोः पार्श्वे हि साम्प्रतम्,
अभावे पञ्चरूप्याणां प्राप्तुं तौ नैव च क्षमः ।
तस्य तद्वचनं श्रुत्वा निःसार्य पञ्चरूप्यकम्,
यदाऽहं प्रददे तस्मै वराकं तं च पृष्टवान् ।
क्व च पितरौ तावद् वर्त्तेते ब्रूहि मामिति,
यत्र गन्तुं समुद्विग्नो बहुशः प्रतिभासि मे ।
मम प्रश्नं समाकर्ण्य बालकः स उवाच यत्,
चलचित्रालये गत्वा चित्रं तौ पश्यतोऽधुना ॥

## १७२. एष धर्मः सनातनः

सूत उवाच—

एकदा नैमिषारण्ये दृष्ट्वा पद्मासने स्थितम्,
नारदम् ऋषयः सर्वे पप्रच्छुर्मुनिपुङ्गवम् ।

ऋषय ऊचुः –

अधर्म एधते पुण्ये भारते भुवि साम्प्रतम्,
धर्मश्च क्षीयते नित्यं कथमत्र महामुने ! ।
बलात्कारोऽपहरणम् अन्याय्यं भ्रष्टतास्तथा,
शासनेऽस्मिन् प्रवर्धन्ते जना एवं वदन्ति वै ।
यदत्र परमं सत्यं वर्त्तते तच्च ब्रूहि नः,
धर्माऽधर्मस्य सन्दर्भे किमत्र भवताम्मतम् ॥

नारद उवाच–

अज्ञास्ते तु प्रतीयन्ते साम्प्रतं भारते नराः,
शासनं ये विनिन्दति दृष्ट्वाऽधर्मप्रवर्धनम् ।
किं नाऽपहरणं जातं स्त्रियास्त्रेतायुगे पुरा,
भीष्मेणाऽपि हृताः कन्याः काशिराजस्य द्वापरे ।
तदाऽप्येवम् अभूदेव यत्राऽऽसीद् हि सुशासनम्,
नवं किमत्र दृष्टं तैः एष धर्मः सनातनः ।
वधूनां ज्वालनं चाऽत्र गृहान्निष्कासनं तथा,
यौतकार्थं कथं गर्ह्यम् एष धर्मः सनातनः ।
सीता निष्कासिता गेहान् मन्ये यौतककारणात्,
प्रक्षिप्ता चाऽग्निमध्येऽसौ एष धर्मः सनातनः ।

बलात्कार-विरोधोऽपि साम्प्रतं नैव युज्यते,
अहिल्यावृत्तमाध्याय,– एष धर्मः सनातनः ।
आश्वासनानि दत्त्वाऽपि विस्मृता यदि मन्त्रिणः,
प्रमाणं तत्र दुष्यन्तः-- एष धर्मः सनातनः ।

वाचं न पालयन्त्येते जित्वा निर्वाचने यदि,
नैवाऽऽश्चर्यं किमप्यत्र महतां तन्निदर्शनम् ।
'शस्त्रं नोत्थापयिष्येऽहम्' इत्युक्त्वा भगवान् स्वयम्,
अभिभीष्मं च किं चक्रे ?- एष धर्मः सनातनः ।
नेतारोऽसत्यवक्तारो भवन्त्येव युगे युगे,
धर्मराजो यथा द्रोणे— एष धर्मः सनातनः ।
दलत्यागस्य वृत्तं च नवीनं नैव विद्यते,
विभीषणो न विस्मार्यः- एष धर्मः सनातनः ।
चक्षुषां स्फोटनं तद्वद् विहारे सम्मतं यथा,
त्रेतायां नासिकाच्छेदः-- एष धर्म सनातनः ।

भ्रष्टाचारो न निन्दार्हं आर्यावर्त्ते विशेषतः,
भ्रष्टाचारं विना कोऽपि सदाचारं न शिक्षते ।
पातालदेशम् आश्रित्य रजनीशो यथाऽधुना,
भोगेषु लभते योगं सम्भोगे च समाधिताम् ।
यथा पङ्के भवेत् पद्मं यथा विषधरे मणिः,
भ्रष्टाचारे तथैवाऽत्र सदाचारोऽधिगम्यते ।

यगे युगे हि धर्मस्य प्रसिद्धा त्वरिता गतिः,
युगधर्मो न हन्तव्यो धर्मो रक्षति रक्षितः ।
इति ते सर्वमाख्यातं गुह्याद् गुह्यतरं मया,
धर्मस्य सकलं तत्त्वं यश्च धर्मः सनातनः ॥

सूत उवाच--

तस्य तद्वचनं श्रुत्वा धर्मतत्त्वविदो मुनेः,
मत्वा धर्ममलुप्यन्तम् आर्यावर्त्ते तपोभुवि ।
जयघोषम्प्रकुर्वाणा नारदम्परितः स्थिताः,
सहर्षम् मुनयः सर्वे प्रतस्थुस्ते निजाऽऽश्रमान् ।

## १७३. अहं स्वामी गृहस्याऽस्य

कलहे प्रवर्त्तमाने तु पतिपत्न्योस्तु मध्यगे,
यदाऽऽक्रान्तवती पत्नी पतिः भीत्वा पलायितः ।
पलाय्य च स खट्वायाः नीचैर्गूढोऽभवत् यदा,
'रे भीरो! बहिरायाहि' पत्नी तम् एवमाह्वयत् ।
समाह्वानं सरोषं तत् श्रुत्वा पतिरुवाच यत्,
'अहम् अस्मि गृहस्वामी निःसरिष्यामि स्वेच्छया ॥

## १७४. भवादृशेभ्यो दीनेभ्यः

कश्चित् समाजकार्यार्थी पुरुषः श्रेष्ठिनं क्वचित्,
साहाय्यार्थं दरिद्राणां चन्दां याचितुम् अध्यगात् ।
तस्य याचनमाकर्ण्य श्रेष्ठी स प्रत्युवाच यत्,
निर्धनोऽहं कुतश्चन्दां प्रदातुं शक्यते मया ।
तस्य तद्वचनं श्रुत्वा श्रेष्ठिनोऽसत्यवादिनः,
उद्विग्नमानसो भूत्वा चन्दायाचक उक्तवान् ।
किञ्चिद् धनं भवानेव नीयतां तर्हि सञ्चयात्,
यतो दीनेभ्य एवाऽयं वर्त्तते धनसंग्रहः ॥

## १७५. पत्नी विश्रान्तिहारिणी

पुरुषं सम्परीक्ष्याऽथ तस्य पत्न्यै चिकित्सकः,
निद्राया गोलिकां दत्त्वा तामेवं निजगाद यत् ।
'आधिग्रस्तो महानेष साम्प्रतं वर्त्तते यतः,
पतिस्ते शान्तचित्तः सन् विश्रामं लभतां गृहे' ।
चिकित्सकवचः श्रुत्वा पत्नी पप्रच्छ तं तदा,
निद्राया गोलिकामेतां तस्मै दास्याम्यहं कदा ।
इत्थं पत्न्यां तु पृष्टायां स वैद्यः समुवाच यत्,
भवत्याभक्षणीयाऽस्तिनिद्राया गोलिका त्वियम् ॥

## १७६. बिलपत्रेण मूर्च्छितः

विलोक्य देवदत्तं तं समपृच्छत् चिकित्सकः,
कथं ते जनकस्तावद् वर्त्तते ब्रूहि मामिति ।
देवदत्तस्तु तं वैद्यम् ऊचे गंभीरया गिरा,
श्रीमन्! मे जनको ह्यस्तु स्वस्थोजातः शनैःशनैः।
परम् अद्य यदा प्राप्तं भावत्कं बिलपत्रकम्,
तदानीमेव चाऽस्वस्थो भूत्वा मोहम् उपागतः ॥

## १७७. निर्णेष्यामि मुखं दृष्ट्वा

सेवकः स्वामिनम्प्राह ग्रामं गच्छाम्यहं प्रभो !
विवाहार्थम् अतो मह्यम् अवकाशः प्रदीयताम् ।
स्वामी पप्रच्छ भृत्यं तं 'कदा प्रत्यागमिष्यसि?'
तदा स सेवकस्तत्र स्वामिनं निजगाद यत् ।
नाऽहं जानामि हे स्वामिन्! आगन्तास्मि कदा यतः,
पत्न्याः मुखं निरीक्ष्यैव निर्णयोऽत्र करिष्यते ॥

## १७८. विवाहेन हतं प्रेम

शकुन्तलाया राज्ञस्तु दुष्यन्तस्य हि नाटकम्,
आद्योपान्तं निरीक्ष्याऽथ कश्चित् प्रेक्षक एकदा।
भूत्वा खिन्नमनास्तत्र नाटकस्य प्रबन्धकम्,
उवाच नाटकं नाऽऽसीत् वत्सरेस्मिन् मनोहरम्।
पात्रं शकुन्तलायाश्च दुष्यन्ताऽभिनयस्तथा,
गतवर्षे कृतो याभ्यां तावेवाऽत्र बभूवतुः।
पुनः किं कारणं ब्रूहि न तथाऽभिनयोऽभवत्,
स्वाभाविकः प्रियश्चाऽथ यथा विगतवत्सरे।
तस्य तद्वाचमाकर्ण्य ब्रूते नाट्य-प्रबन्धकः,
यद्यत्र कारणं सत्यं ज्ञातुमिच्छसि श्रूयताम्।
विगते वत्सरे स्यातां तौ कुमारावुभौ परम्,
विवाहः साम्प्रतं ताभ्यां कृतश्चाऽथ परस्परम्॥

## १७९. अशान्तिं कुरुते 'शान्तिः'

कोऽयम् महानसे स्थित्वा स्रोच्चैराक्रोशते भृशम्,
'अहं शान्तिरिहाऽस्मीति' भार्या प्रष्टारम् आह तम्॥

## १८०. वाराणस्यां सुशाटिकाः

पतिः पप्रच्छ वै प्रेम्णा पत्नीं नवविवाहिताम्,
एकमेव वरं तावद् वृणीष्व साम्प्रतं प्रिये ! ।
वाराणस्यां हि गन्तासि मनोरञ्जनकाङ्क्षया,
अथवा शाटिकाम् अत्र नवीनां नेतुमिच्छसि ।

पत्युस्तद्वचनं श्रुत्वा पत्नी तं प्रत्युवाच यत्,
काश्यां चलतु, तत्रस्था अल्पमूल्या हि शाटिकाः ॥

## १८१. मृत्युदण्डाद् अहं मुक्तः !

शतायुषं नरं कश्चिद् जिज्ञासुः कोऽपि चैकदा,
तद्दीर्घजीवनस्याऽथ रहस्यं पृष्टवान् यदा ।
चिरायुः पुरुषः प्राह पुलिसोऽयम् ममाऽऽयुषः,
कारणं दीर्घतायास्तु वर्त्तते इति ज्ञायताम् ।

तस्योत्तरं समाकर्ण्य चकितः स उवाच यत्,
कथं पुलिस एवाऽयं कारणं स्यात् चिरायुषः ?
तच्छ्रुत्वा वृद्ध ऊचे यत् पुलिसोऽयं तु निष्क्रियः,
देवदत्तस्य हन्तारं अद्याऽपि नैव ज्ञातवान् ।

यदि सोऽमार्गयिष्यत् तद्हन्तारं तर्हि निश्चितम्,
नाऽभविष्यत् ममाऽऽयुर्वै दीर्घम् एतावद् अद्य तु ॥

## १८२. पितामहस्य शूरत्वम्

प्रवेशमिच्छुः सेनायां साक्षात्कर्त्तारम् उक्तवान्,
युवकः कोऽपि वीरत्वं कीर्त्तयन् निजवंशजम् ।
तथाविधस्य पौत्रोऽहं शूरपितामहस्य यः,
चरणौ शत्रुसेनान्याश्चिच्छेद समराङ्गणे ।
तस्य तद्वचनं श्रुत्वा साक्षात्कर्त्ता तु पृष्टवान्,
पितामहस्ते सेनान्याः शिरश्चिच्छेद नो कथम्?
प्रश्नमेनं समाकर्ण्य प्रत्याशी स उवाच यत्,
शिरस्तु तस्य केनाऽपिच्छिन्नं स्यात् पूर्वमेव हि ।।

## १८३. मूर्खायाः उपकारकः

पतिपत्न्योर्विवादेऽथ पत्नी पतिमुवाच यत्,
किं त्वया कस्यचित् कश्चिद् उपकारः कृतो भुवि?
तस्यास्तद्वाचमाकर्ण्य पतिरेवम् उवाच यत्,
मूर्खाम् असंस्कृताम् एकां कन्यां तु परिणीतवान् ।।

## १८४. परिहासो न रोचते

कश्चित् क्रोधसमाविष्टो मल्लः कमपि मानवम्,
उच्चैश्चपेटिकामेकां कपोले त्वथ दत्तवान् ।
तच्चपेटिकया क्रुद्धः दुर्बलः स तु पूरुषः,
पप्रच्छ तत्र तं मल्लं सहमानश्चपेटिकाम् ।
क्रोधे मां हतवानत्र परिहासेऽथवा भवान्,
इत्यहं ज्ञातुमिच्छामि का तेऽभूदिह भावना ?
तस्य प्रश्नं समाकर्ण्य मल्लः स प्रत्युवाच यत्,
क्रोधेनाऽहं जघान त्वां ब्रूहि मे किं करिष्यसि?
श्रुत्वा मल्लमुखादेवं स नरो निजगाद यत्,
तदा तु सहनीयं स्याद् यदि क्रोधे त्वया हतः ।
अन्यथा त्वत्र केनाऽपि कदाचिदपि वा कृतः,
एवंविधो मया कोऽपि परिहासो न सह्यते ॥

## १८५. अहं सेवानियोजकः

न्यायाधीशो यदा चौरं रुष्टः पप्रच्छ,किं त्वया,
कदाऽपि कस्यचिद् ब्रूहि हितं साधितमत्र वै? ।
प्रश्नमेनं समाकर्ण्य चौरोऽपि तत्क्षणं तदा,
विनीतभावमापन्नो न्यायधीशम् उवाच यत् ।
अस्माकं कारणादेव विभागे पुलिसस्य वै,
बहवः पुरुषाः श्रीमन्! सेवायां निरता इति ॥

## १८६. पूर्वं विकासकार्येऽहम्

कश्चिन्नरः कार्यकर्त्ता परिवार - नियोजने,
दशानां तनयानां च जनकः समवर्त्तत ।
एकदा कोऽपि पप्रच्छ 'कथं ते वंशवर्धनम्,
नियोजनविभागेऽपि भूत्वा तावद् इदं महत् ?
एवं पृष्ठे स प्रत्यूचे - 'इतः पूर्वमहं सखे !
विकासस्य विभागेषु नियुक्तस्त्वभवम् भृशम् ॥

## १८७. हानिस्ते पूरयिष्यते

ग्राहकः कश्चिद् आगत्य पत्रकार्यालये यदा,
प्राह सम्पादकं क्रुद्धस्तत्र साक्रोशया गिरा ।
पत्रिका प्रेष्यते या वै संकेते तत्र नाम्नि मे,
'द्विवेदी' लिख्यते नित्यं 'त्रिवेदी' चाऽहमस्मि भोः!
एवम् एकस्य वेदस्य प्रतिमासं तु वर्त्तते,
या हानिस्तस्य दुःखं तु न भवान् ज्ञातुमर्हति ।
तदा तद्वाचमाकर्ण्य स सम्पादक उक्तवान्,
नाऽग्रे हानिर्भवेद् एतद् अवधास्याम्यहं परम् ।
या हानिरेकवेदस्य पूराऽभूद् अथ तत्कृते,
तव नाम्नि 'चतुर्वेदी' लिखित्वा पूरयिष्यते ॥

## १८८. अप्रतिष्ठं कुलं तव

वदन्तीं वीक्ष्य साक्रोशं भार्यां पतिरुवाच यत्,
प्रतिष्ठितकुलस्याऽसि वधूस्त्वम् उच्यतां शनैः ।
पत्युस्तद्वचने पत्न्या संशोधनमिदं कृतम्,
वधूर्न हि, परं पुत्री वर्त्तेऽहम् इति कथ्यताम् ।

## १८९. एवम् आसीद् भवानपि

सुतां विवाहयोग्यां तु दृष्ट्वा सा पतिमाह यत्,
अन्वेष्यतां वरः कोऽपि निश्चिन्तोऽत्र भवान् कथम्
तस्यास्तां वाचमाकर्ण्य पतिः क्षुब्धो जगाद यत्,
मार्गयामि परं सर्वे मूर्खा ग्राम्या मिलन्ति माम् ।
पत्युरुत्तरमाकर्ण्य पत्नी शान्तेन चेतसा,
प्रोवाचाऽथ पतिं तत्र सस्मितं स्निग्धया गिरा ।
यदि मे जनकोऽप्येवं विचारम् अकरोत् तदा,
अहमप्यद्यपर्यन्तं नाऽभविष्यं विवाहिता ॥

## १९०. सच्चारित्र्य-प्रमाणता

न्यायाधीशो यदाऽपृच्छत् अभियुक्तमिदं हि यत्,
किं निजसच्चरित्रस्य प्रमाणं दातुमर्हसि ?

तच्छ्रुत्वा वचनं तस्याऽभियुक्तो निजगाद यत्,
आम्,श्रीमन्! तत्प्रमाणेऽयं थानाध्यक्षस्तु वर्त्तते ।

तस्य तां वाचमाकर्ण्य थानाध्यक्ष उवाच यत्,
'नो श्रीमन्! नैव जानेऽहम् अभियुक्तमिमं क्वचित्'

थानाऽध्यक्षवचः श्रुत्वाऽभियुक्तः पुनरुक्तवान्,
विनीतभावमापन्नो न्यायाधीशमिदं वचः ।

'अहं हि दशभिर्वर्षैः वसामि नगरे त्विह,
थानाध्यक्षो न मां वेत्ति प्रमाणं किमतः परम्' ।।

## १९१. साम्प्रतं वृद्धपाचकः

पप्रच्छ ग्राहकः कश्चिद् भोजनालय-स्वामिनम्,
किं युवा पाचकोऽत्रस्थः कार्यं त्यक्त्वा पलायितः ?

तस्य प्रश्नं समाकर्ण्य स्वामी स निजगाद यत्,
आम् श्रीमन्! सत्यमेतत् तु परं ज्ञातं कथं त्वया?

ततः स ग्राहकोऽवोचत् - पूर्वं तु मम भोजने,
निःसृताः श्यामकेशाश्च श्वेता आयान्ति साम्प्रतम् ।।

## १९२. पुनर्गणन-याचना

प्रसवपीडया ग्रस्ता नेतुः पत्नी च कस्यचित्,
गत्वाऽऽतुरालये तावत् त्रिकन्याः सुषुवे यदा ।
कक्षात् बहिः समागत्य काचित्तु परिचारिका,
श्रावयामास नेतारं समाचारमिमं तदा ।
तत्समाचारमाकर्ण्य नेता साक्रोशम् उक्तवान्,
कथमेवं भवेत् ? कुर्वे पुनर्गणनयाचनाम् ॥

## १९३. दृष्टान्तोऽन्यः प्रदीयताम्

कश्चित् चिकित्सकस्तावत् मनोरोगिणम् उक्तवान्,
विस्मृत्य विगताः वार्त्ता निश्चिन्तः सर्वथा भव ।
पश्य माम् अधमर्णोऽहम् एकस्य व्यवसायिनः,
विस्मृत्य देयकं तस्य चिन्तामुक्तोऽस्मि साम्प्रतम् ।
अत आधिनिवृत्त्यर्थं चिन्तामुक्तः पुरा भव,
शनैः शनैश्च सुस्वास्थ्यं निश्चितं समवाप्स्यसि ।
एवं तस्य वचः श्रुत्वा मनोरोगी स उक्तवान्,
कश्चिदन्यस्तु दृष्टान्तः कृपया दीयतां यतः ।
अहमेव स व्यापारी भवामि यस्य चाऽऽपणात्,
वस्त्रं सहस्ररूप्याणां नीतवान् बहुधा भवान् ॥

## १९४. वर्त्तमानात् कदा मुक्तिः

दैवज्ञः कश्चिद् एकां तु युवतीम् एवम् उक्तवान्,
दृष्ट्वा तस्याः करं लुब्धः सहर्षं तां प्रसादयन् ।
मनोरथाऽनुसारं ते विवाहो भविता ध्रुवम्,
पतिश्च सुन्दरोऽत्यन्तं धनयुक्तो भविष्यति ।
श्रुत्वा तद्वचनं हृष्टा पप्रच्छ युवती तदा,
वर्त्तमानाच्च मे पत्युर्वियोगः संभवेत् कथम् ? ॥

## १९५. करियुद्धं दिदृक्षसि ?

किरायादायकः—

बहवो मूषकाः श्रीमन् ! वर्त्तन्ते भवतां गृहे,
युध्यमानाश्च दृश्यन्ते निशि नित्यं परस्परम् ।

भवनस्वामी—

दत्वा विंशतिरूप्याणि प्रतिमासं च केवलम्,
किमत्र हस्तिनां युद्धं द्रष्टुमिच्छसि मद्गृहे ॥

## १९६. तदा त्वं बहु रोचसे

'उपायं कमपि ब्रूहि पत्नी मे बहु भाषते,'
इति तस्य वचः श्रुत्वा सखा चोपायम् आह्वयत् ।
द्वि-त्रिवारं गृहे नित्यं भार्यां त्वं स्मारयस्व यत्,
'ओष्ठौ यदा निबद्धौ ते तदा त्वं बहु रोचसे' ॥

## १९७. ऋणं प्रतिददामि ते

सखायौ कुत्रचिद् देशे गच्छतः स्म यदा तदा,
निर्जने कानने केचिद् दस्यवः समुपागता ।
दस्यून् वीक्ष्य सखा त्वेको योऽधमर्णो बभूव वै,
उत्तमर्णाय मित्राय तत्रैव सहयात्रिणे ।
दत्त्वा पञ्चशतं तस्मै रूप्याणि स तदाऽब्रवीत्,
'मित्र! यत्तु पुरा नीतं तत् प्रत्यावर्त्तयामि ते ॥

## १९८. भाग्यं फलति सर्वत्र

कस्यचित् कृषकस्याऽऽसन् चत्वारस्तनयाः प्रियाः,
त्रयस्तत्र कुशाग्रास्ते नित्यम् अध्ययने रताः।
एकश्चिकित्सकोऽभवद् अभियन्ता तथाऽपरः,
अधिवक्ता तृतीयस्तु प्रसिद्धः समपद्यत ।
परम् एको महामूर्खश्चतुर्थस्तनयोऽभवत्,
नित्यम् अध्ययनाद् दूरो विद्या-श्रम-विवर्जितः।
कक्षायां स दशम्यां तु द्विरनुत्तीर्णतां गतः,
किं कर्त्तव्यविमूढात्मा राजनीतौ प्रविष्टवान् ।
विधायकपदे भूत्वा प्रत्याशी स त्वथैकदा,
अकस्माद् विजयंप्राप्य शिक्षामन्त्रित्वमाप्तवान्।
स्मरामि बहुधाऽत्रोक्तं पूर्वजैः सत्यमेव यत्,
भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् ॥

## १९९. अत्रास्ति सुमहान् भेदः

'सुपुस्तक-सुनार्योश्च मध्ये को भेद उच्यते',
इति प्रश्नं समाकर्ण्य देवदत्त उवाच यत् ।
स्पष्टमेवास्ति भिन्नत्वं यतः सुन्दरपुस्तके,
अन्धकारेऽपि चाऽऽनन्दं कः प्राप्तुं शक्नुते नरः? ॥

## २००. निःशुल्कं शिक्ष्यते कथम् ?

थानाध्यक्षो यदा चौरं पृष्टवान् यत् कथं त्वया,
सुनिबद्धं कपाटं तत् शीघ्रम् उद्घाटितं निशि ?
तस्य तत्प्रश्नमाकर्ण्य चौरोऽसौ प्रत्युवाच यत्,
प्रयासाऽभ्याससंयुक्ता गुरुसेवाभिरर्जिता ।
इयं फलवती विद्या मया यत्नात् परिष्कृता,
कथं सा भवते स्वामिन्! निःशुल्कं शिक्षयिष्यते ।।

## २०१. अथ भारतवाक्यम्

लिखितं यदिहाऽत्र पुस्तके बहुधा कल्पितमेव चाऽस्ति तत् ।
परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः ।।

[ इतिश्रीडा॰ प्रशस्यमित्रशास्त्रि विरचितो 'हास-विलास:' समाप्ति गतः ]

अथापि च—

अत्रोद्यातु दिवानिशं धृतिमतां चौर्यप्रवृत्तिः सुखम्,
मित्राणां हृदयेषु चाऽपि सुतरामीर्ष्याऽङ्कुरो जागृयात् ।
इत्थं शत्रुविधानतोऽपि विभवो दुःखस्य नश्याद्द्रुतम्,
भूयाद् हास-विलास-लास-लसितं सौख्यं सदा सर्वदा ।।

सम्पादकः

# व्यङ्ग्यानां वर्णाऽनुक्रमः

# अंशुमद्ग्रन्थमालायाः विशिष्टानि पुष्पाणि

(छात्राणां शिक्षकाणां पुस्तकालयानाञ्च कृते)

| | | |
|---|---|---|
| १ | नैषधीय-चरितम्, व्याख्यासहितम् (प्रथमः सर्गः) | १२.५० |
| २. | नैषधीयचरित : एक अध्ययन | ०५.२५ |
| ३. | आर्षकाव्य एवं प्रकृति | ७०.०० |
| ४. | किरातार्जुनीयम्, व्याख्यासहितम् (प्रथमः सर्ग.) | ०४.८० |
| ५. | संस्कृतदिग्दर्शिका—प्रकाशः | ०२.५० |
| ६. | संस्कृतपरिचायिका—प्रबोधः | ०१.६० |
| ७. | वैदेशिकाः गीर्वाण्युपासकाः | ०४.०० |
| ८. | संस्कृते नाट्य-सौष्ठवम् | ०६.५० |
| ९. | नैषधीय-चरित का अभिनव समीक्षात्मक एवं व्याख्यात्मक अध्ययन | ४०.०० |
| १०. | नैषधीयचरित-विमर्श | १६.०० |
| ११. | संस्कृत-नाटकसाहित्य : विवेचनात्मक अध्ययन (विस्मृतिपटल) | ३५.०० |
| १२. | चरण-शरण-स्तोत्र-काव्यम्, मूलमात्रम् (पुरस्कृतम्) | ०५.०० |
| १३. | ,, ,, ,, ,, (अर्थसहितम्) | (मुद्रणालये) |
| १४. | लेखोक्ति-लहरी | ०५.०० |
| १५. | कथा-सप्तकम् | ......... |
| १६ | आधुनिक-सन्दर्भे कालिदासः | ८.०० |
| १७. | रत्ना के राम (हिन्दी-खण्डकाव्य) | ३०.०० |
| १८. | हास-विलासः (संस्कृत-हास-व्यंग्य-रचना) | २५.०० |
| १९. | यन्त्रसर्वस्व के वैमानिक-प्रकरण का विवेचनात्मक अध्ययन | (मुद्रणालये) |
| २०. | मौर्य-चन्द्रोदयम् (महाकाव्यम्) | ,, |
| २१. | मानसी (अभिनव-संस्कृत-कथाः) | ,, |
| २२. | कथा-विशेषांकः (पारिजातम्) | ७.०० |
| २३. | रूपकविशेषांकः ( ,, ) | ७.०० |
| २४. | शोध-समीक्षा-विशेषांकः ( ,, ) | ८.०० |

माध्यमिक-स्नातक-परास्नातक-छात्राणां कृते अत्यन्तोपयोगिग्रन्थानां समुत्कृष्ट-शोधप्रबन्धानाञ्च प्रकाशनस्य अद्वितीयं संस्थानम्। संस्कृतसाहित्य-हिन्दीसाहित्य-दर्शनशास्त्रप्रभृतिविषयकपुस्तकानां प्राप्तिस्थानञ्च।


## शिक्षक—प्रकाशनम्

१०५/१९४ प्रेमनगरम्, कानपुरम्-१ दूरवाणी : २४९०४४